No share prices,
no political fortunes, yet...

# Over 40% of Heritage readers are professionals or executives, 61% from households with a professional / executive as the chief wage earner. Half hold a postgraduate degree or a professional diploma.

– from an IMRB survey conducted in Oct. 1986




It's an unusual magazine. It has a vision for today and tomorrow.

It features ancient cities and contemporary fiction, culture and scientific developments, instead of filmstar interviews and political gossip. And it has found a growing readership, an IMRB survey reveals. Professionals, executives and their families are reading The Heritage in depth – 40% from cover to cover, 42% more than half the magazine.

More than 80% of The Heritage readers are reading an issue more than once.

And over 90% are slowly building their own Heritage collection.

Isn't it time you discovered why?

CMP-2155



# THE HERITAGE



**So much in store, month after month.**

# पुरुषार्थसमन्वयः

धर्मार्थकामाः सममेव सेव्याः
यो ह्येकभक्तः स नरो जघन्यः।
द्वयोस्तु दाक्ष्यं प्रवदन्ति मध्यं
स उत्तमो योऽभिरतस्त्रिवर्गे।।

"धर्मार्थकामाः समरूपेण एव सेवनीयाः। त्रिषु अन्यतमे केवलम् आसक्तः अधमत्वेन परिगण्यते। अन्यतरयोः समर्थः मध्यम इत्युच्यते। यः त्रिषु अर्थेषु अपि निरतः भवति स उच्यते उत्तमः इति।"

इहलोके संस्थित्यर्थं परत्र सद्गत्यर्थं च आचर्यमाणाः सद्व्यवहाराः एव 'धर्मः'। एतदर्थम् अपेक्षितानां सामग्रीजातानां सम्पादनम् एव (धर्माविरोधेन) 'अर्थः'। आत्मनि सहजाः विविधाः अपेक्षाः एव 'कामः'। श्लोकेऽस्मिन् मोक्षस्य प्रसक्तिः न स्फुटा। मोक्षः लोकातीतः विषयः। यः लौकिकेषु पुरुषार्थेषु त्रिषु कृतकृत्यः भवति सः मोक्षम् अर्हति। मृत्तिकादिमालिन्यानाम् अपनयनेन भूमौ स्थितः मणिः यथा स्वयं प्रकाशते तथा त्रिवर्गद्वारा प्राप्तात् लोकसंसर्गात् शुद्धीकृतः जीवः स्वयंप्रकाशमानस्य अन्तरात्मनः रूपेण प्रकाशते। एवं कामादीनाम् अपगमेन निर्मलतां प्राप्य परमात्मसाक्षात्कारप्राप्तिः एव मोक्षः।

त्रिषु अपि पुरुषार्थेषु समन्वयः सदा अपेक्षितः। महाभारते अन्यत्र एतद्विषये एवम् उक्तम् अस्ति—

"धर्मार्थौ धर्मकामौ च कामार्थौ चाप्यपीडयन्।
धर्मार्थकामान् योऽभ्येति सोऽत्यन्तं सुखमश्नुते।।

धर्मस्य अर्थस्य, धर्मस्य कामस्य वा, कामस्य अर्थस्य वा परस्परबाधा यथा न स्यात् तथा धर्मार्थकामरूपं त्रिवर्गं यः सेवते सः अत्यधिकं सुखं प्राप्नोति" इति।

(संस्कृतिनामकात् पुस्तकात्)

जिज्ञासा –

# पदानाम् अन्वयः

शिष्यः- श्रीमन्! संस्कृते वाक्येषु ये केऽपि शब्दाः यत्र कुत्रापि स्थापिताः चेदपि अर्थव्यत्यासः न भवति इति कश्चन वादः श्रूयते .....।

आचार्यः- आम्। 'रामः शालां गच्छति' इति वाक्ये त्रयः शब्दाः सन्ति खलु? तेषाम् आनुपूर्वी एवम् एव भवेत् इति न नियमः। 'रामः गच्छति शालाम्' 'गच्छति रामः शालाम्' 'गच्छति शालां रामः' 'शालां गच्छति रामः' 'शालां रामः गच्छति' इति एवं यथाकथम् अपि वक्तुं शक्नुमः।

शि - किन्तु पूर्वोक्तः नियमः सर्वत्र न अन्वेति खलु? तस्य नियमस्य अपवादाः बहवः सन्ति।

आ - भवता कुत्र अपवादः दृष्टः? एकम् उदाहरणं वदतु।

शि - रामस्य पुत्रः मित्रेण सह गच्छति' इति वाक्ये 'रामस्य' इति पदं स्थानान्तरे स्थापयामः चेत् – तन्नाम 'पुत्रः रामस्य मित्रेण सह गच्छति' इति उक्तं चेत् – अर्थे भेदः दृश्यते।

आ - सम्यक् चिन्तितं भवता। षष्ट्यन्तस्य पदस्य स्थानं प्रायः परिवर्तयितुं न शक्नुमः।

शि - किमर्थम् एवम्?

आ - संस्कृते षष्ठीं विहाय इतरासां विभक्तीनां सम्बन्धः क्रियापदेन सह भवति। एकं वाक्यं पश्याम तावत् – 'रामः प्रातःकाले द्विचक्रिकया गृहात् शालां वेगेन गच्छति'। अत्र वाक्ये गच्छति इति क्रियापदं प्रधानम्। तेन सह इतरेषां सम्बन्धः स्वातन्त्र्येण भवति।

एवं च क्रियापदेन सह यः सम्बन्धः भवति तद्बलात् सर्वेषां पदानां विभक्त्यर्थनिश्चयः भवति (न तु स्थानबलात्) इत्यतः यः कोऽपि शब्दः यत्र

कुत्रापि स्थापितः चेदपि तमेव अर्थं निरूपयति।

शि - षष्ठ्याः क्रियापदेन सह सम्बन्धः नास्ति इति एतावता सिद्धम्।

आ - सम्यक् तर्कितं भवता। प्रायशः षष्ठ्याः क्रियापदेन सह सम्बन्धः न भवति। (कुत्रचित् 'कृष्णस्य कृतिः' इत्यादिषु क्रियया सह सम्बन्धः भवति इति तु अन्यत् एतत्।) शब्दान्तरेण सह सम्बन्धः भवति। यत्र स्थानपरिवर्तनेन अन्यसम्बन्धकल्पनायाः अवसरः तत्र षष्ठ्यन्तस्य पदस्य परिवर्तनं न शक्यते। भवता तादृशम् उदाहरणं प्रदर्शितम्।

शि - स्थानपरिवर्तनेन यत्र अर्थभेदः भवति तादृशम् अपरम् उदाहरणम् अस्ति वा?

आ - अव्ययानि– च, अपि, एव इत्यादीनि अपि स्थानपरिवर्तनं न सहन्ते। यथा– 'अहम् एव तत्र आगच्छामि' इति वाक्ये एवकारं 'तत्र' इत्यस्य पुरतः स्थापयामः चेत् भिन्नः एव अर्थः सिध्यति। 'आगच्छामि' इत्यस्य पुरतः स्थापयामः चेत् अन्यः एव अर्थः दृश्यते।

शि - एतादृशम् अपरम् उदाहरणम्?

आ - एकस्मिन् वाक्ये बह्व्यः क्रियाः भवन्ति चेत् तत्तत्क्रियासम्बद्धाः शब्दाः तत्तया क्रियया सहैव स्थापनीयाः। यथा– 'माता स्नानं कृत्वा पाकं करोति' इति वाक्ये स्नानपाकयोः परस्परस्थानपरिवर्तनेन भिन्नः एव अर्थः सिध्यति।

शि - श्रीमन्, 'कृत्वा' इति पदं किं क्रियां द्योतयति?

आ - ज्ञातः भवतः सन्देहः। कृत्वा कर्तुम् इत्यादीनि अपि क्रियां द्योतयन्ति वा? इति चिन्तयन् अस्ति भवान्। तिङ्प्रत्ययसहितं ('गच्छति' इत्यादिकम्) पूर्णक्रियां द्योतयति। क्त्वान्तं ('गत्वा' इत्यादिकम्) पूर्वकालिकक्रियां द्योतयति। तुमुन्नन्तं ('गन्तुम्' इत्यादिकम्) क्रियार्थक्रियां द्योतयति। क्तिन्प्रत्ययान्तं (गतिः) ल्युट्प्रत्ययान्तं वा (गमनम्) लिङ्गसङ्ख्याविशिष्टतां बोधयति। एवम् अत्र सर्वत्र क्रिया तु द्योत्यते एव।

शि - एवं वा! तिङन्तपदं केवलं क्रियां द्योतयति, न तु अन्यत् इति भ्रमः आसीत मम।

*



# चन्दमामा

डिसेम्बर्-१९८८

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ३-००

वार्षिकं ग्राहकशुल्कं रू. ३६-००




# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

भाषात्वेन समानता चेदपि संस्कृतभाषा इतरभाषाभ्यः केषुचित् अंशेषु किञ्चिदिव भिद्यते। उदाहरणं– दोषाः। इतरभाषासु बहुभिः बहुधा उक्ताः दोषाः अपि अनुमताः भवन्ति। किन्तु संस्कृते न तथा।

अपरं वैशिष्ट्यं नाम शास्त्राभिज्ञाः, किञ्चिज्ज्ञाः अनभिज्ञाः – इत्येवं सर्वोऽपि लोकः संस्कृते दोषं सर्वथा न अनुमनुते। भाषाप्रचारतत्पराः भाषाभ्यासदृष्ट्या, प्रोत्साहदृष्ट्या च दोषान् सहन्ते इति तु अन्यदेतत्।

लेखन–मुद्रणादिदोषविषये अपि पूर्वोक्ता एव धारणा अनुस्रियमाणा दृश्यते। दोषाणाम् अननुमतिः सर्वदा श्रेयसे एव। किन्तु असहनम् अपथ्याय।

चन्दमामा सदापि दोषविषये जागरूका एव भवति। तथापि कदाचित् कथमपि केचन दोषाः दृश्यन्ते एव। एतादृशे सन्दर्भे उदारता भवतु इति सविनयं प्रार्थयते चन्दमामा।

एतस्य अर्थः– 'ते दोषाः अनुमन्तव्याः' इति सर्वथा न। काले काले स्नेहेन पत्रद्वारा ते सूचनीयाः एव। दोषदर्शनमात्रेण महान् उद्वेगः असमाधानं वा मास्तु, उदारया बुद्ध्या स्नेहेन च तान् दोषान् मां स्मरयन्तु कृपया।

सम्पुटः–५ डिसेम्बर्–१९८८ सञ्चिका–९

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००

रसप्रश्नाः–

# हनूमत्पराक्रमः

(सीताहस्ततः अभिज्ञानार्थं चूडामणिं स्वीकृत्य निर्गतः हनूमान् अशोकवनं नाशितवान्। बद्धुम् आगतान् राक्षसान् सः लीलया यमपुरीं प्रेषितवान्। एतां घटनाम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

I. हनूमान् अशोकवनं किमर्थं नाशितवान्?
(अ) कपिसहजेन चापल्येन। (आ) रावणं द्रष्टुम् इच्छन्। (इ) क्रोधवशात् युक्तायुक्तताम् अजानन्।

II. अशोकवनं नाशितवन्तं हनूमन्तं बद्धुं सर्वप्रथमं के आगतवन्तः?
(अ) प्रमुखाः सेनापतयः। (आ) रावणपुत्राः। (इ) किङ्करनामकाः राक्षसाः।

III. तान् राक्षसान् हनूमान् केन आयुधेन मारितवान्?
(अ) तोरणस्थेन परिघेण। (आ) समीपस्थेन सालवृक्षेण। (इ) दृढया मुष्ट्या।

IV. चैत्यप्रासादं नाशितवन्तं हनूमन्तं बद्धुम् आगतः हनूमता मारितः राक्षसः कः?
(अ) प्रहस्तपुत्रः जम्बुमाली। (आ) शतहस्तपुत्रः अंशुमाली। (इ) विहस्तपुत्रः वनमाली।

V. सप्त मन्त्रिकुमारान् पञ्च सेनानायकान् च मारितवन्तं हनूमन्तं बद्धुम् आगतस्य रावणपुत्रस्य नाम किम्?
(अ) इन्द्रजित्। (आ) मेघनादः। (इ) अक्षकुमारः।

VI. रावणपुत्रः हनूमन्तं केन अस्त्रेण बद्धवान्?
(अ) ब्रह्मास्त्रेण। (आ) नागास्त्रेण। (इ) पाशुपतास्त्रेण।

उत्तराणि–

I–(आ) II–(इ) III–(अ) IV–(अ) V–(इ) VI–(अ)

*

# रसवार्ताः



## 'येति' पदचिह्नानि?

श्रूयते यत् हिमालयप्रदेशे 'येति'नामकः महाप्राणी निवसति इति। एतां वार्तां श्रुत्वा इंग्लेण्ड्देशीयः कश्चन गणः अन्वेषणार्थम् उद्युक्तः जातः। तद्गणीयैः विशालानि पदचिह्नानि तत्र तत्र दृष्टानि। गणनायकः वदति—"येतिनामकः प्राणी अस्ति इति नेपालजनानां दृढः विश्वासः। वयं तादृशं प्राणिनं न दृष्टवन्तः। किन्तु तस्य अस्तित्वं स्यात् इति अनुमिनुमः वयम्" इति।



## ऊर्ध्वकमुरजवादने नवविक्रमः

अलीगढनिवासी चन्दनचटर्जीनामकः २५ घण्टाः यावत् ऊर्ध्वकमुरजं वादयन् नवविक्रमम् उपस्थापितवान् अस्ति।



## 'स्पिंक्स्'विग्रहस्य समीकरणम्

'कैरो'समीपे विद्यमानानां शङ्कुभवनानां समीपे मानवशिरस्कस्य सिंहशरीरकस्य 'स्पिंक्स्'देवस्य सुविशालः विग्रहः ४,६०० वर्षेभ्यः स्थितः अस्ति। एतस्य शरीरस्य केचन भागाः तत्र तत्र नष्टाः सन्ति। तस्य समीकरणार्थं महता परिमाणेन व्यवस्था क्रियमाणा अस्ति।

## विश्वपरिक्रमणं कृतवती महिला

'सिडनि'निवासिनी मिस् कोटी नाम महिला लघुनौकाम् आरुह्य एकाकिनी ४,२०० कि.मी. दूरं यावत् निरन्तरप्रयाणं कृत्वा १८९ दिनेषु विश्वपरिक्रमणं समाप्य स्वस्थानम् आगतवती। एतादृशं साहसमयं कार्यं कृतवती मिस् कोटी अद्वितीयत्वेन सम्मानिता।



# स्वाभाविकता

कस्मिंश्चित् नाटके दूर्वाससः पात्रं निर्वोढुं समर्थस्य नटस्य आवश्यकता कदाचित् आपतिता। एतां वार्तां ज्ञात्वा पञ्च नटाः नाटकसङ्घस्य कार्यालयम् आगतवन्तः। नाटकसङ्घस्य कश्चित् कार्यकर्ता तान् उक्तवान्– "अस्माकं स्वामी बहिर्गतः अस्ति। दश-पञ्चदशनिमेषेषु सः प्रत्यागच्छेत्। कृपया उपविशन्तु" इति।

नाटकसङ्घस्य यजमानः आदिनारायणः एकघण्टानन्तरं प्रत्यागतवान्। आसने उपविश्य तान् कांश्चन प्रश्नान् पृष्टवान्। अन्ते असमाधानेन उक्तवान् सः– "अभिनये सर्वथा अनभिज्ञाः भवन्तः। एवं स्थिते अपि किमर्थम् अत्र आगताः? किम् एतां धर्मशालां मन्यन्ते?" इति।

एतत् श्रुत्वा चत्वारः नटाः लज्जाम् अनुभूय शिरः अवनमय्य स्थितवन्तः। किन्तु चतुर्थः श्रीहरिः कोपं प्राप्य उच्चस्वरेण उक्तवान्– "किं भोः, दश-पञ्चदशनिमेषान् यावत् प्रतीक्षां कुर्वन्तु इति सूचितम्। एकघण्टां यावत् प्रतीक्षा करणीया आपतिता। महता व्ययेन महता कष्टेन च वयम् अत्र आगताः। शिष्टाचारार्थं वा भवता किञ्चित् विनयः न प्रदर्शितः। कीदृशी मूर्खता!" इति।

तदा सः नाटकसङ्घस्य यजमानः आदिनारायणः हसन् उक्तवान्– "दूर्वासाः शीघ्रकोपी आसीत्। यः स्वभावेन शीघ्रकोपी, तादृशः अन्वेष्टव्यः इति उद्देशेन मया एवम् आचरितम्। श्रीहरे, भवान् दूर्वाससः पात्रस्य निर्वहणार्थं स्वीकृतः मया" इति।





# हरदासस्य विवाहः

शिवपुरनामके ग्रामे हरदासः नाम कश्चन युवकः निवसति स्म। तदीये बाल्ये एव तदीयौ मातापितरौ दिवङ्गतौ आस्ताम्। अतः केषुचित् गृहेषु लघुलघुकार्याणि कुर्वन् सः दिनानि यापयन् आसीत्।

तस्मिन् ग्रामे मल्लवर्मा नाम कश्चन मल्लः आसीत्। तस्य हरदासविषये विशेषतः प्रीतिः। एतया एव प्रीत्या प्रेरितः सः हरदासं दण्डचालनं गदाचालनं च पाठितवान्। दण्डचालने हरदासः असाधारणं नैपुण्यं प्राप्तवान्। यदा सः दण्डचालनार्थम् उद्युक्तः भवति तदा प्रेक्षकाः दण्डचालनध्वनिं केवलं शृण्वन्ति, किन्तु दण्डं न पश्यन्ति।

प्राप्तवयस्कस्य हरदासस्य मनसि सहजतया विवाहेच्छा भवति एव। किन्तु एतस्मै अनाथाय बालकाय कन्यां दातुं को वा उत्सहेत? हरदासस्य विश्वासः आसीत यत मम सद्व्यवहारं विद्याकौशलं च दृष्ट्वा कोऽपि स्वकन्यां दद्यात् इति। किन्तु एषः विश्वासः विफलः जातः। अतः हरदासः नितरां खेदम् अनुभवति।

शिवपुरे महानन्दः नाम धनिकः आसीत्। सः स्वपुत्र्याः विवाहं सवैभवं निर्वर्तितवान्, पुत्रीं पतिगृहं प्रेषयितुम् इष्टवान् च। किन्तु मार्गे अरण्येषु लुण्ठाकाः सन्ति इति वार्ता श्रूयते स्म।

'एवं स्थिते अमूल्यैः आभरणैः सह पुत्रीं कथं वा पतिगृहं प्रेषयामि?' इति भूस्वामी सगम्भीरं चिन्तयन् आसीत्। तदा ग्रामप्रमुखः भूस्वामिनं सूचितवान् – "श्रीमन्! शिबिकया सह केचन सेवकाः तु गच्छन्ति एव खलु? तैः सह हरदासम् अपि प्रेषयत। दण्डचालने सः असदृशं सामर्थ्यं वहति। दश लुण्ठाकान् अपि सः एकाकितया सम्मुखीकर्तुं

"अनामिका"



समर्थः" इति।

भूस्वामी ग्रामप्रमुखस्य प्रस्तावम् अङ्गीकृतवान्। पुत्र्या सह हरदासम् अपि प्रेषितवान्। तेन यथा चिन्तितं तथैव प्रवृत्तम्। मार्गे दश चोराः शिबिकाम् आक्रम्य स्थितवन्तः। तान् दृष्ट्वा भूस्वामिनः सेवकाः पलायितवन्तः। किन्तु हरदासः दण्डं स्वीकृत्य सधैर्यं चोराणां सम्मुखं स्थितवान्। पुरतः आगतान् चोरान् दण्डेन सम्यक् ताडितवान् सः। एतत् दृष्ट्वा चोराः ततः पलायितवन्तः।

भूस्वामिनः पुत्री सकुशलं पतिगृहं प्राप्तवती। ग्रामं प्रत्यागतवन्तं हरदासं सर्वे ग्रामीणाः प्रशंसितवन्तः। ग्रामप्रमुखः तम् उक्तवान् – "भोः, भवतः अदृष्टं फलितम् इति भावयतु। भवान् भूस्वामिनः पुत्रीं सकुशलं पतिगृहं प्रापितवान्। चोरान् सधैर्यं सम्मुखीकृतवान् अपि। भवान् यत् इच्छति तत् दद्यात् सः। इतः परं भवतः जीवने काऽपि समस्या न भविष्यति" इति।

किन्तु भूस्वामी हरदासं स्वयं न दृष्टवान् अपि। कस्यचित् सेवकस्य द्वारा कानिचन नाणकानि तस्मै प्रेषयित्वा मौनम् आश्रितवान् सः। एतस्मात् प्रसङ्गात् हरदासः सज्जनताविषये एव अविश्वासं प्राप्तवान्। 'ग्रामं त्यक्त्वा कुत्रापि सुदूरं गन्तव्यम्' इति आलोचयन् आसीत् सः।

एवं स्थिते एकदा रात्रौ कश्चन पुरुषः हरदासस्य गृहम् आगत्य उक्तवान् – "प्रायः मम परिचयं प्राप्तुं भवान् न शक्नोति। केभ्यश्चित् दिनेभ्यः पूर्वं भवत्तः दण्डप्रहारं प्राप्य पलायितेषु चोरेषु अहम् अपि अन्यतमः। अहं मम नायकस्य सन्देशं स्वीकृत्य अत्र आगतवान् अस्मि। शृणोतु, भवादृशः समर्थः यदि अस्माकं गणं प्रविशेत् तर्हि अस्माकम् अपि लाभः, भवतः अपि लाभः। अस्माभिः या सम्पत्तिः प्राप्यते तत्र पञ्चमम् अंशं भवते दास्यामः। अतः भवान् अपि अस्माकं गणस्य सदस्यः भवतु। उत्तमकार्याणां फलं कीदृशम् इति भवान् अनुभवबलात् ज्ञातवान् एव अस्ति" इति।

तत्समये हरदासः 'सर्वे गुणाः

काञ्चनमाश्रयन्ति' इति वाक्यं स्मृतवान्। चौर्यम् एव वरम् इति निर्णीय सः चोराणां गणस्य सदस्यः अभवत्।

एकदा इतरैः चोरैः सह गत्वा हरदासः कञ्चन यात्रिकम् अवरुध्य गर्जितवान् – "भवतः समीपे यत् धनम् अस्ति तत् विना शब्दम् अत्र स्थापयतु" इति।

यात्रिकः भयात् कम्पमानः स्वकोषतः शतनाणकानां ग्रन्थिं बहिः आनीय हरदासस्य हस्ते स्थापयन् – "मित्र! एतत् धनं मम पुत्र्याः विवाहनिमित्तं महता श्रमेण आर्जितम्। एतत् धनं मम हस्ततः निर्गतं चेत् मम पुत्री आजीवनं कुमारी एव तिष्ठति" इति वदन् अश्रूणि स्रावितवान्।



तस्य अवस्थां दृष्टवतः हरदासस्य मनसि करुणा उत्पन्ना। एतत् दृष्ट्वा इतरे चोराः कठोरस्वरेण उक्तवन्तः – "एतादृशाः सर्वदा एवम् एव वदन्ति। एतादृशेषु कदापि दया न प्रदर्शनीया" इति।

"मम तु एतस्य वचने कपटता कापि न भाति। वराकम् एतं धनेन सह प्रेषयाम वयम्" इति सूचितवान् हरदासः।

किन्तु एतं प्रस्तावम् अङ्गीकर्तुम् इतरे चोराः न सिद्धाः। ते स्पष्टम् उक्तवन्तः – "एतत्क्षणतः भवतः अस्माकं च सम्बन्धः छिन्नः। यत्र कुत्रापि गत्वा यथाकथम् अपि जीवतु भवान्। किन्तु कदापि अस्माकं कार्ये विघ्नः न उत्पादनीयः" इति। अनन्तरं ते ततः निर्गतवन्तः।

अपायस्य निर्गमनात् यात्रिकः नितरां सन्तुष्टः। सः हरदासं गौरवेण नमस्कृत्य पृष्टवान्– "मित्र! अपायपरिस्थितौ भवान् मम साहाय्यं कृतवान्। दर्शनेन भवान् सज्जनः इति भाति अपि। कथं वा चोरगणे भवतः प्रवेशः अभवत्?" इति।

तदा हरदासः पूर्वं प्रवृत्तं समग्रं निवेद्य उक्तवान्– "सज्जनताविषये मम विश्वासः एव नष्टः। अनन्यगत्या अहं चोराणां गणं प्रविष्टवान्" इति।

तदा सः यात्रिकः हरदासं बोधितवान्– "मित्र! भवतः एषः निर्णयः अयुक्तः। सत्कार्यस्य सत्फलं भवति एव। त्वरावशात्



राक्षससमीपं गतवान्। तदा करालकण्ठः राजानं त्यक्त्वा विकटाट्टहासं कुर्वन् उक्तवान्– "अये! कः भवान्? मां दृष्ट्वा सर्वे भीत्या पलायन्ते। भवान् तु धैर्येण अग्रे आगच्छन् अस्ति खलु?" इति।

"अहं यः कोऽपि भवेयं नाम। मम परिचयप्राप्त्या भवतः कः लाभः? किन्तु किं भवान् न जानाति – मानवानां खादनं परमनिन्द्यं कार्यम् इति?" इति राक्षसं पृष्टवान् हरदासः।

"अहं राक्षसः, मानवान् खादामि इति तु सत्यम् एव। किन्तु अहम् अपि नीतिनियमं पालयामि एव। अहं प्रतिदिनम् एकम् एव जनं खादामि। अतः अद्य भवान् जीवितः। धावतु इतः। कुत्रापि सुखेन जीवतु" इति उक्तवान् राक्षसः।

"प्रतिदिनं कञ्चित् एकं खादति खलु भवान्? तर्हि तं परित्यज्य माम् एव खादतु" इति सूचितवान् हरदासः।

राक्षसः परमाश्चर्यं प्राप्य पृष्टवान्– "किं भवतः प्राणेषु प्रीतिः नास्ति?" इति।

"प्राणाः सर्वेषां प्रियतमाः एव। किन्तु भवान् यं खादितुम् उद्युक्तः सः एतस्य देशस्य राजा। अहं तु सामान्यः नागरिकः। मादृशस्य जीवनस्य अपेक्षया राज्ञः जीवनं श्रेष्ठं, यतः तत् बहूनाम् उपकारकं भवति" इति उक्तवान् हरदासः।

तदा राक्षसः हरदासं गृहीत्वा उक्तवान्

भवता असमीचीनः निर्णयः स्वीकृतः। मम नाम विनम्रः। अहं राजास्थाने उद्योगी अस्मि। मया सह आगच्छतु। तत्र कमपि उद्योगं दापयितुं प्रयत्नं करिष्यामि" इति।

एतदनन्तरं हरदासः विनम्रेण सह गतवान्। किञ्चिद्दूरं गमनानन्तरं ताभ्यां किञ्चन विचित्रं दृश्यं दृष्टम्–

करालकण्ठः नाम राक्षसः कञ्चन पुरुषं वामहस्तेन उन्नीय खादितुम् उद्युक्तः आसीत्। राक्षसेन गृहीतस्य वाहनम् अश्वः हेषारवं कुर्वन् तत्र सञ्चरति स्म। तत् दृश्यं दृष्ट्वा भीत्या कम्पमानः विनम्रः उक्तवान् – "हा हन्त! राक्षसेन मुष्टौ गृहीतः न अन्यः। सः साक्षात् अस्माकं महाराजः एव" इति।

एतत् श्रुत्वा हरदासः झटिति धैर्येण



"भवतः साहसेन त्यागेन च अहं सन्तुष्टः अस्मि। जीवनस्य अन्तिमा इच्छा कापि स्यात् तर्हि तां वदतु, पूरयिष्यामि" इति।

क्षणकालं विचिन्त्य हरदासः उक्तवान् – "अहं बाल्यतः दण्डचालनम् अभ्यस्तवान् अस्मि। अतः दण्डचालनार्थम् एकवारम् अवकाशं कल्पयतु" इति।

राक्षसः एतत् वचनम् अङ्गीकृतवान्। हरदासः दण्डं स्वीकृत्य चालयितुम् आरब्धवान्। दण्डचालनस्य शब्दः तु श्रूयते, किन्तु दण्डस्य गतिः सर्वथा न दृश्यते!

एतत् दृष्ट्वा राक्षसः अतीव सन्तुष्टः। सः हरदासं पृष्टवान् – "दण्डचालने भवता अपूर्वं कौशलं साधितम्। एतां विद्यां मां पाठयति वा?" इति।

हरदासः एतत् सन्तोषेण अङ्गीकृत्य दण्डग्रहणविधिं, चालनरीतिं, आश्रयणीयां जागरूकतां च राक्षसः यथा जानीयात् तथा पाठितवान्।

सन्तुष्टः राक्षसः उक्तवान् – "इदानीं भवान् मम गुरुः। भवान् गुरुदक्षिणारूपेण किम् इच्छति? वदतु" इति।

"अद्य आरभ्य भवता पशून् खादता उदरं पूरणीयम्। मनुष्याः न मारणीयाः। एषा एव मम अपेक्षिता गुरुदक्षिणा" इति उक्तवान् हरदासः।

राक्षसः क्षणकालम् आलोच्य हरदासम् उक्तवान् – "भवान् यां गुरुदक्षिणां पृच्छति सा मम दृष्ट्या कष्टकरी एव। अस्तु तावत्, इदानीं मध्यमस्य मार्गस्य अनुसरणं वरम्। अहं भवते किञ्चन उपहारं ददामि। तत् भवता मनसा तिरस्कृतं चेत् अहं नरमांसभक्षणं त्यक्ष्यामि" इति।

अनन्तरं सः हरदासं महाराजं च समीपस्थां गुहां प्रति नीतवान्।

तत्र सुवर्णाभरणानां कश्चन राशिः आसीत्। तं प्रदर्शयन् राक्षसः हरदासं पृष्टवान्– "अहम् एतानि सर्वाणि आभरणानि दक्षिणारूपेण भवते दातुं सिद्धः। इदानीं वदतु, आजीवनसुखदायिनम् एतं सुवर्णराशिम् इच्छति, उत अकिञ्चित्कर्याः पूर्वं पृष्टायाः इच्छायाः पूरणम् इच्छति?" इति।

तदा हरदासः मन्दहासपूर्वकम् उक्तवान्– "धनराशिं दृष्ट्वा अहं प्रलोभनया वशीकृतः भवामि इति चिन्तयति वा भवान्? भवत्तः गुरुदक्षिणारूपेण नरमांसभक्षणस्य त्यागम् एव इच्छामि अहम्" इति।

राक्षसः सन्तोषेण शिरः चालयन् उक्तवान्– "अहं कदापि वचनभङ्गं न करोमि। भवतः इच्छाम् अवश्यं पूरयामि। किन्तु स्मरतु-भवन्तः मानवाः सदा चञ्चलचित्ताः। भवान् यदि कदाचित् प्रलोभनया वशीकृतः सन् मत्तः सुवर्णराशिम् इच्छेत् तद्दिने अहं सुवर्णराशिं भवते दत्त्वा नरमांसभक्षणस्य आरम्भं करिष्यामि" इति।

"तादृशी परिस्थितिः यथा न भवेत् तथा जागरूकतया तिष्ठामि अहम्" इति उक्त्वा हरदासः महाराजेन, विनम्रेण च सह राजधानीं गतवान्।

हरदासस्य स्वभावेन आकृष्टः राजा स्वपुत्रीं तस्मै दातुं सङ्कल्पितवान्।

राज्ञी महाराजस्य एतं सङ्कल्पं श्रुत्वा असम्मतिं प्रकटितवती। तदा राजा तां बोधितवान्– "हरदासः अस्माकं जामाता भवितुं सर्वथा योग्यः। सज्जनतायाम् अविश्वासं प्राप्य सः चोराणां गणं प्रविष्टवान् आसीत्। तथापि तदीयः साधुस्वभावः दुष्प्रवृत्तिं दूरीकृतवान्। अत एव सः अस्माकं सेवकं विनम्रं रक्षितवान्। राक्षसमुष्टौ स्थितस्य मम निमित्तं प्राणार्पणं कर्तुं सिद्धः जातः अपि। धनस्य अपेक्षया जनानां प्राणाः श्रेष्ठाः इति भावयन् सः राक्षसेन दीयमानम् आभरणराशिं तिरस्कृतवान्। एवं राजोचिताः सर्वे गुणाः सन्ति तस्मिन्। इतोऽपि उत्तमः भावी राजा को वा लभ्येत?" इति।

एतत्सर्वं श्रुत्वा राज्ञी अङ्गीकारं प्रदर्शितवती। एतदनन्तरम् अल्पेषु एव दिनेषु राजकुमार्याः हरदासस्य च विवाहः सवैभवं सम्पन्नः। हरदासः भाविनि काले प्रजाहितं साधयन् श्रेष्ठः राजा इति कीर्तिं प्राप्तवान्।






# उदारता

जगन्नाथः कश्चन प्रसिद्धः धनिकः। सः स्वकीयेन सेवकेन शिवरामेण सह प्रतिवर्षं पार्श्वस्थे ग्रामे प्रचलन्तं देव्याः रथोत्सवं द्रष्टुं गच्छति। देव्याः उत्सवं प्रति आगच्छतां जनानां कृते प्राथमिकं सौलभ्यम् अपि न आसीत् तस्मिन् ग्रामे। भक्ताः प्रतिवर्षं यत् कष्टम् अनुभवन्ति तत् पश्यति शिवरामः। एतत् दृष्टवतः तस्य मनः नितरां खिन्नं भवति।

कदाचित् यजमानेन सह देव्याः उत्सवार्थं गतः शिवरामः उत्सवस्य व्यवस्थापकं दृष्ट्वा– "श्रीमन्! मया किञ्चित् धनं सङ्गृहीतम् अस्ति। तत् धनं देव्यै समर्पयितुम् इच्छामि। तेन धनेन उत्सवसन्दर्भे प्रपाशालां व्यवस्थापयन्तु भवन्तः इति मम प्रार्थना। इतोऽपि उत्तमं कार्यं किमपि भवतां मनसि अस्ति चेत् तदर्थं वा एतत् धनम् उपयोक्तुं शक्यते। अहं यथामति काञ्चित् सूचनां दत्तवान्। धनस्य सदुपयोगविषये अन्तिमनिर्णयः भवताम् एव" इति उक्त्वा धनग्रन्थिं व्यवस्थापकस्य हस्ते स्थापितवान्।

शिवरामेण यत् सत्कार्यं कृतं तद्विषये सर्वत्र वार्ता प्रसृता। धनिकः जगन्नाथः अपि तां वार्तां श्रुतवान्।

सः तद्दिने एव सर्वान् ग्रामप्रमुखान् एकत्रीकृत्य घोषितवान् यत् देव्याः उत्सवार्थम् आगच्छतां यात्रिकाणां निमित्तं मया काचित् धर्मशाला अचिरात् एव निर्मीयते इति।

क्षणमात्रेण सा वार्ता ग्रामे प्रसृता। सर्वे जनाः धनिकस्य उदारतायाः प्रशंसां कृतवन्तः।

एतदनन्तरम् अल्पे एव काले शिवरामः अस्वस्थः जातः, तेनैव हेतुना दिवं गतः चापि।

"विवेकः"

अनन्तरवर्षे धनिकः यथापूर्वं पार्श्वस्थे ग्रामे प्रचलन्तम् उत्सवं प्रति गतवान्। तत्र तद्ग्रामीणाः धनिकसमीपम् आगत्य– "भवतः सेवकः शिवरामः पुण्यात्मा एव। तेन यत् दानं दत्तं तेन सहस्रशः यात्रिकाः पिपासां निवारयितुं शक्तवन्तः। जनाः जलं पीत्वा शिवरामस्य नाम स्मृत्वा तस्य सद्गतिं प्रार्थयन्तः गच्छन्ति" इति वदन्तः बहुधा शिवरामस्य प्रशंसां कृतवन्तः।

एतत् श्रुत्वा ईर्ष्यया पीड्यमानः धनिकः कोपेन उक्तवान्– "शिवरामः तु पिपासानिवारणार्थं काञ्चित् व्यवस्थां कृतवान्। तावता एव तस्य प्रशंसां कुर्वन्ति खलु भवन्तः?" इति।

"आं श्रीमन्! तेन धनं न दत्तं चेत् प्रपायाः व्यवस्था सर्वथा न अभविष्यत्। उत्सवस्य व्यवस्थापकः एव अत्र प्रमाणम्" इति उक्तवन्तः जनाः।

तदा जगन्नाथः असमाधानेन उक्तवान्– "एतत् तु मया अपि ज्ञायते एव। मया अत्र काचित् विशाला धर्मशाला सद्यः एव निर्मीयते। प्रसङ्गवशात् पृच्छामि – मम मरणानन्तरं भवन्तः मम विषये किं वदेयुः?' इति।

अत्रान्तरे जनसमूहात् अग्रे आगतः कश्चन वृद्धः उक्तवान्– "महानुभाव! मृतः जनः अल्पम् उपकारं कृतवान् स्यात् चेत् अपि जनाः तस्य स्मरणं कुर्वन्ति एव। किन्तु ये महतः कार्यस्य उद्घोषणं केवलं कृत्वा कार्यप्रवृत्ताः न भवन्ति तान् जनाः न स्मरन्ति। अत्र दानशूरः कश्चित् धर्मशालां निर्मास्यति इति वर्षात् पूर्वम् एव श्रुतम्। दिनानि तु अतीतानि। धर्मशालायाः कार्यम् इतोऽपि न आरब्धम्। न जाने, ततं वचनं कदा कार्यान्वितं भवेत् इति" इति।

वृद्धेन यत् कटुसत्यं प्रत्यक्षम् उक्तं तत् सम्यक् अवगतं धनिकेन। सः तस्मिन् एव वर्षे सकलसौकर्योपेतां विशालां धर्मशालां निर्मापितवान्। उक्तं वचनं पालयन् जनानां प्रशंसायाः पात्रं जातः च।






# १२

[युवराज्ञ्याः साहाय्येन विनोदः नक्षत्रफलं खादित्वा कष्टकरं मार्गम् अपि अतिक्रम्य अग्रे गतवान्। सिंहसाहाय्यात् अग्निभित्तिम् अतिक्रम्य सरोवरे स्थितं कोटरं प्रविश्य एकं नूतनं प्रदेशं प्राप्तवान्। तत्र कश्चन वृद्धः मिलितः। सः विनोदस्य आगमनकारणं ज्ञात्वा सूचितवान् यत् भवान् देवीं त्रीन् वरान् केवलं प्रार्थयितुम् अर्हति इति। तदनन्तरम् ......]

क्रमशः पूर्वस्यां दिशि सुवर्णवर्णेन युक्ता सूर्यकान्तिः तस्मिन् प्रदेशे व्याप्ता अभवत्। एतादृशं वर्णरञ्जितं प्रभातं विनोदः न दृष्टवान् आसीत्। एतत् अपूर्वं दृश्यं दृष्ट्वा सः अतीव सन्तुष्टः। तस्य मनसि आनन्दतरङ्गाः सञ्चरन्ति।

"अहो, अपूर्वः प्रभातकालः! अदृष्टपूर्वं सौन्दर्यम्! अश्रुतपूर्वः अनुभवः। वस्तुतः अपि अहं कुत्र अस्मि इत्येव मम संशयः" इति आनन्दोत्कण्ठितः विनोदः उक्तवान्।

"भवान् भौतिकविश्वस्य समीपे एव अस्ति। किन्तु अत्र भौतिकलोकस्य अंशाः न सन्ति। अत्रत्यः सूर्यः केवलं प्रकाशं न ददाति, अपि तु सर्वम् अपि ददाति। भवतः हृदयं शुद्धम् अस्ति चेत् भवान् सूर्यतः विशेषज्ञानं प्राप्तुम् अर्हति। सूर्यस्य अन्यानि अपि सामर्थ्यानि सन्ति। सः विभिन्नैः वर्णैः प्रकाशं प्रसारयितुम् अर्हति। अत्र यानि अपूर्वाणि

"मनोजदासः"



पुष्पाणि फलानि च दृश्यन्ते तानि अपि तस्य अनुग्रहात् एव। सः प्रतिदिनम् अपि नूतनानि पुष्पाणि फलानि च सृजति'' इति उक्तवान् सः वृद्धः अर्चकः।

''भवान् न सामान्यः अर्चकः, अपि तु महायोगी'' इति उक्तवान् विनोदः।

अपूर्वकान्त्या विलसन्त्याः देव्याः विग्रहस्य नेत्राभ्याम् अश्रूणि आगतानि। विनोदः प्रतिमां साष्टाङ्गं नमस्कृत्य भक्त्या तस्याः आराधनं कृतवान्। पूजां समाप्य विनोदः शिरः उन्नीय विग्रहं दृष्टवान्। प्रतिमायाः चरणयोः समीपे मुष्टिमितानि पुष्पाणि पतितानि आसन्। एतत् दृष्ट्वा विनोदः आश्चर्यचकितः अभवत्। यतः तस्य प्रणामात् पूर्वं तत्र पुष्पाणि एव न आसन्।

''वत्स! अत्र आश्चर्यस्य विषयः कोऽपि नास्ति। भवता कृता प्रार्थना पुष्परूपं प्राप्य मातुः पदतले स्थिता अभवत्। प्रार्थना कथं पुष्परूपेण परिवर्तते इति भवतः सन्देहः वा? शोभा, स्वच्छता, शान्तिः च यत्र भवति तत्र प्रकृतौ किञ्चित् स्पन्दनं दृश्यते। ततः पुष्पाणि विकसितानि भवन्ति। यः विश्वकल्याणार्थं प्रार्थनां करोति, तस्य निमित्तम् अत्र शून्यात् आकाशात् अपि पुष्पाणि उद्भवन्ति'' इति उक्तवान् वृद्धः अर्चकः।

विनोदः भक्तिपूर्वकं करौ योजयित्वा नमस्कृत्य उक्तवान्– ''अये मातः! सुवर्णखन्यां स्थितायां स्वर्णप्रतिमायां प्राणान् प्रतिष्ठापयतु। एतदर्थम् एव मम सर्वे प्रयत्नाः आसन्। एतदर्थम् एव अत्र आगतवान् अपि। जीवसहितायाः स्वर्णप्रतिमायाः दर्शनं प्राप्य अहं कृतार्थः भविष्यामि। मम आशा पूरिता भवेत् इति विश्वसिमि वा अहम्?'' इति। विनोदस्य वाक्यस्य समाप्तेः समनन्तरम् एव देव्याः हस्ततः एकं कमलपुष्पम् अधः पतितम्।

''भवतः प्रार्थना सफला जाता। शुद्धेन मनसा कृता प्रार्थना कदापि निष्फला न भवति। देवी भवद्विषये सन्तुष्टा अस्ति। भवतः प्रार्थना तया अनुमता अपि। इदानीं मया यथा उक्तं तथा आचरतु। भवान् स्वस्य

अङ्गुल्यां स्थितम् अङ्गुलीयकं निष्कास्य स्वर्णप्रतिमायाः अङ्गुल्यां धारयतु। तदा तस्यां प्राणप्रतिष्ठा कृता भवति" इति सूचितवान् अर्चकः।

एतत् श्रुतवतः विनोदस्य मनसि विचारः आगतः यत् प्राणप्रतिष्ठया सजीवत्वं प्राप्नुवतीं युवतीं परिणेतुम् अहं यदि शक्नुयां तर्हि समीचीनं स्यात् इति। तथापि ताम् इच्छां क्षणाभ्यन्तरे निगृह्य स्थितवान्। हसितुम् असमर्थं ज्ञानभूमिवासिनं युवराजं स्मृतवान् सः।

"देवि! ज्ञानभूमौ ये निवसन्ति ते यथा हसितुं शक्नुयुः तथा वरेण अनुगृह्णातु। तत्रत्यः कोऽपि हसितुं न शक्नोति इति तु खेदस्य विषयः। हासकारणतः मनः निर्मलं पवित्रं च भवति। ततः आनन्दस्य सुखस्य च वृद्धिः भवति। ज्ञानभूमिवासिनः अपि यदि हसितुं शक्नुयुः तर्हि सा च भूमिः स्वर्गतुल्या स्यात्" इति विनोदः द्वितीयाम् अपेक्षां प्रकटीकृतवान्।

देव्याः हस्ततः अपरम् एकं कमलपुष्पम् अधः पतितम्।

"भवतः द्वितीया अपेक्षा अपि सफला जाता" इति उक्तवान् वृद्धः अर्चकः।

तदनन्तरं विनोदः भक्त्या तृतीयाम् अपेक्षां प्रार्थितवान्– "मातः! शान्तिभूमिवासिनः गातुं यथा शक्नुयुः तथा वरेण अनुगृह्णातु" इति।

इदानीं तृतीयं कमलपुष्पं देव्याः हस्ततः च्युतं, किन्तु अधः न पतितम्। एतत् दृष्ट्वा





पुष्पम् आकाशे अतिष्ठत्' इति ज्ञातवान् विनोदः। पुनः एकं वरं प्रष्टुम् अवकाशः नास्ति खलु इति खेदः तस्य। 'चतुर्थं वरं पृष्टं चेत् का हानिः?' इति आलोचयति सः।

अनन्तरक्षणे कश्चन विचित्रः शब्दः श्रुतः। विनोदः परिवृत्य परितः दृष्टवान्। किन्तु तेन किमपि न दृष्टम्। किन्तु भूमिः परिभ्रमति इति इव अनुभवः तस्य। पर्वताः, खाताः, नद्यः, तडागाः, उद्यानानि, भवनानि इत्यादीनि सर्वाणि अगाधतायां निलीनानि इव दृश्यन्ते। किन्तु किं प्रवर्तते इति स्पष्टं न जानाति विनोदः। सः मूर्च्छां प्राप्य एकत्र पतितवान्।

किञ्चित्कालानन्तरं सचेतनतां प्राप्य सः परितः दृष्टिं प्रसारितवान्। तदा सः ज्ञातवान् यत् अहं नीलपर्वतस्य उपरि अस्मि, पुरतः युवराज्ञी मन्दहासपूर्वकम् उपविष्टवती अस्ति इति। विनोदः उत्साहेन उत्थाय उक्तवान्– "युवराज्ञि! अहं भवत्याः निमित्तं सङ्गीतप्राप्तिरूपं वरम् आनीतवान् अस्मि" इति।

"भवान् प्रयाणे सफलतां प्राप्य आगतवान् इति अहं ज्ञातवती एव। भवान् प्रत्यागतवान् इति एतदेव अत्र प्रमाणम्" इति उक्तवती युवराज्ञी।

"अस्तु तावत्, आवाम् एकं गीतं गायाव वा?" इति पृष्टवान् विनोदः।

"भवान् पाठयतु, अहम् अवश्यं गायामि"

विनोदः आश्चर्यचकितः अभवत्। प्रथमं द्वितीयं च पुष्पं भूमौ यथा पतितं तथा तृतीयं किमर्थं न पतितम्? किमर्थं वा तत् आकाशे एव स्थितम् अभवत्? इति विनोदः न ज्ञातवान्। सः अर्चकं प्रार्थितवान्– "श्रीमन्! तृतीयस्य एतादृशी अवस्था किमर्थम्? भवान् एतस्य कारणं जानीयात् इति अहं चिन्तयामि। कृपया कारणं निवेदयतु" इति।

"शान्तभूमिवासिभिः सङ्गीतं पठनीयं नास्ति। यतः भवता या युवराज्ञी दृष्टा तां विना तत्रत्या काऽपि व्यक्तिः सङ्गीतं पठितुं न इच्छति। अतः युवराज्ञी केवलं, सङ्गीतं पठितुम् अर्हति" इति सूचितवान् अर्चकः।

'अपेक्षायाः कश्चन भागः पूरितः इत्यतः

इति उत्साहेन उक्तवती युवराज्ञी।

विनोदः मन्दस्वरेण गीतम् आरब्धवान्। युवराज्ञी तस्य अनुकरणम् आरब्धवती। आरम्भे किञ्चिदिव अधैर्यम् आसीत् तस्याः। किन्तु अनन्तरकाले सम्यक् एव गीतवती सा। किन्तु सा यथा यथा गायति तथा तथा विनोदात् दूरं गच्छति। एतत् दृष्टवतः विनोदस्य परमाश्चर्यं भीतिः च।

गायन्ती युवराज्ञी मेघरूपं प्राप्य विनोदे पश्यति एव सा अदृश्यतां गता। "युवराज्ञि! युवराज्ञि!" इति आह्वयन् विनोदः मतिभ्रान्तः इव धावितवान्। एवं धावन् सर्वत्र अटन् सः एकत्र पतितः, मूर्च्छां गतः च।

"वत्स! भवता एतत् न विस्मर्तव्यं यत् युवराज्ञी भौतिकप्रपञ्चेन सम्बद्धा न इति। स्वसमीपे यावत् अस्ति तावता एव तृप्त्या जीवन्ति तस्याः भूम्याः जनाः। गीतगानापेक्षायाः प्रकटनं नाम आवश्यकतायाः अपेक्षया अपि अधिकस्य अभिलाषः इति। एतादृशी प्रवृत्तिः मानवानां भवति। तृप्तिभूमिवासिषु युवराज्ञी एका एव गानस्य अपेक्षां प्रकटितवती। अतः सा एतस्मात् लोकतः अदृश्यतां प्राप्य मानवरूपं धृतवती स्यात्।"

विनोदः यावत् नेत्रे उद्घाटितवान् तावता एतानि वचनानि तेन श्रुतानि। सः स्वपार्श्वे उपविष्टवन्तं कृपालुं मुनिं– यश्च पूर्वं मार्गदर्शनं कृतवान् आसीत्– दृष्टवान्। सः तं श्रद्धया नमस्कृत्य पृष्टवान्– "श्रीमन्! इदानीम् अहं कुत्र अस्मि?" इति।





"भवान् ज्ञानभूमेः समीपे अस्ति। अत्र भवता अधिककालं यावत् न स्थातव्यम्। भवान् यत् वरं प्राप्तवान् तस्य परिणामतः ज्ञानभूमिवासिनः हाससामर्थ्यं प्राप्तवन्तः सन्ति। इतः परं भवता अविलम्बेन इतः सुवर्णखनीं प्रति प्रस्थातव्यम्" इति सूचितवान् मुनिः।

"अहं कथं गच्छेयम्? मया सर्वथा मार्गः विस्मृतः" इति उक्तवान् विनोदः।

तदा मन्दहासपूर्वकं मुनिः उक्तवान्– "वत्स! भवान् एतदपि विस्मृतवान् यत् आत्मनः अदृश्यरूपप्राप्तिशक्तिः अस्ति इति। तां शक्तिं स्मरतु प्रथमम्। तदाधारेण भवान् स्वनिवासं प्राप्तुम् अर्हति" इति।

अनन्तरं मुनिः विनोदं मार्गम् उपदिष्टवान्। विनोदः एकं पर्वतम् आरूढवान्। ततः ज्ञानभूमिराज्यं स्पष्टं दृश्यते स्म। राजभवनं पर्वतस्य समीपे एव आसीत्। केचन राजभटाः विनोदं दृष्ट्वा गत्वा राजानं विनोदागमनं निवेदितवन्तः।

अल्पे एव काले राजा, युवराजः, मुख्यमन्त्री, प्रमुखाः अधिकारिणः इत्यादयः प्रासादस्य उपरितने भागे स्थितवन्तः। ते उत्साहेन हस्तम् उन्नीय विनोदस्य स्वागतम् उक्तवन्तः। केचन नागरिकाः अपि मार्गे स्थित्वा सन्तोषेण हस्तं चालितवन्तः।

एतत् दृष्ट्वा विनोदः अपि सन्तुष्टः। 'एतैः सह किञ्चित्कालं स्थित्वा गन्तव्यम्' इति आलोचयन् आसीत् विनोदः। किन्तु मुनिः आदिष्टवान्– "समयः अतीतः भवति। अविलम्बेन सुवर्णखनीं प्राप्नोतु" इति।

मुनेः आदेशं निराकर्तुम् अशक्तः विनोदः मुनिं विनयेन नमस्कृत्य तस्य अनुज्ञां प्राप्य सुवर्णखनीं प्राप्तुं सङ्कल्पं कृतवान्। शक्तितरङ्गरूपेण परिवृत्तः सन् अदृश्यतां प्राप्य अल्पे एव काले सुवर्णखनीप्रदेशे प्रत्यक्षम् अभवत् सः।

पूर्णस्य चन्द्रस्य ज्योत्स्नया जलप्रपातः अपूर्वकान्त्या विलसति स्म। विनोदस्य उपरि उड्डयमानः कश्चन कोकिलः कूजनम् अकरोत्। शुभसूचकं तत् कूजनं शृण्वन् विनोदः सुवर्णविग्रहम् उद्दिश्य गतवान्।

'मम हस्ते स्थितम् अङ्गुलीयकं

सुवर्णप्रतिमायाः अङ्गुलौ योजयामि चेत् सा प्रतिमा सजीवा भवति। किन्तु तदनन्तरम् ....? यतः सजीवं प्रत्यक्षीभवन्त्याः युवत्याः परिणयः मया न प्रार्थितः। अतः मम तस्याः च परिणयः सर्वथा असम्भवः एव। सा दुष्टस्य राज्ञः हस्ततः आत्मनः विमोचनं कथं वा साधयेत्?' इत्यादिरूपेण किञ्चित्कालं चिन्तयन् आसीत् विनोदः। अनन्तरं सः दृढं सङ्कल्पितवान्— 'प्रथमं विग्रहे प्राणान् प्रतिष्ठापयिष्यामि। अनन्तरं यत् भविष्यति तत् भवतु नाम' इति। अनन्तरं विनोदः अङ्गुलौ स्थितम् अङ्गुलीयकं निष्कास्य विग्रहस्य अङ्गुलौ स्थापितवान्।

तत्समनन्तरम् एव विद्युत्स्फुरणं जातम् इव! अपूर्वकान्तिमती काचित् युवतिः वेदिकातः मन्दं पदं स्थापयन्ती अधः आगत्य विनोदस्य पार्श्वे स्थितवती। उक्तवती च— "एतस्य अर्थः अयं यत् आवयोः विवाहः सम्पन्नः अस्ति इति" इति।

तस्याः युवत्याः हासः कण्ठस्वरः च 'सुपरिचितः इति भासते विनोदस्य मनसि किन्तु एतादृशः कण्ठस्वरः कुत्र श्रुतः, स च हासः कुत्र दृष्टः इति विनोदः सर्वथा न स्मरति।

सः आश्चर्येण पृष्टवान्— "किम् उक्तवती भवती? आवयोः विवाहः जातः इति?" इति।

"विचित्रस्य जलप्रपातस्य अतिक्रमणात् पूर्वं मम हस्ते स्थितम् अङ्गुलीयकं भवतः हस्ते आगतम् आसीत्। इदानीं भवतः अङ्गुलौ स्थितम् अङ्गुलीयकं मम अङ्गुलौ आगतम्। एवं च विवाहस्य प्रधानः संस्कारः सम्पन्नः अभवत्। एवं चेत् विवाहः सम्पन्नः इत्येव खलु अर्थः?" इति हसन्ती उक्तवती सा युवतिः।

'यः वरः प्रार्थनीयः इति चिन्तितः अपि न प्रार्थितः स च वरः एवम् अनायासं सिद्धः' इति ज्ञातवतः विनोदस्य अपरिमितः सन्तोषः जातः।

—(अग्रिमसञ्चिकायां समाप्ता भविष्यति)






# महार्णवराजकुमारी

'पिशाचः एव स्वप्रयत्नात् विरतः न भवति, मानवः अहं कथं वा स्वप्रयत्नं त्यजेयम्' इति आलोचयन् त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत् – "अये राजन्! आरब्धस्य कार्यस्य अपरित्यागः उत्तमजनानां लक्षणम्, सत्यम्। किन्तु एतस्मिन् कार्ये भवान् स्वयम् उद्युक्तः, उत अन्यस्य प्रेरणया इत्येव मम सन्देहः। अन्येषां वचनेषु विश्वस्य कार्यप्रवृत्तः लाभम् एव प्राप्नुयात् इति न नियमः। किन्तु लाभः न भवति इत्यापि न। अतः तादृशे सन्दर्भे विशेषजागरूकता वरम्। अत्र उदाहरण-रूपेण महार्णवदेशस्य राजकुमार्याः कौसल्यायाः कथां श्रावयामि। कथां शृण्वतः गच्छतः भवतः मार्गायासः निश्चयेन परिहृतः

## वेतालकथा



भवेत्" इति।

अनन्तरं वेतालेन कथा आरब्धा –

पूर्वं कुवलयाश्वः नाम राजा महार्णवदेशं परिपालयन् आसीत्। सः न्यायप्रियः स्वभावेन शान्तः च। किन्तु महाराज्ञी सुनन्दिनी साक्षात् एतद्विरुद्धा। तस्याः प्रतिरोम अहङ्कारः आसीत्। तयोः दम्पत्योः कौसन्या नाम पुत्री आसीत्। कौसल्या सौन्दर्येण अद्वितीया तु न, किन्तु पिता इव स्वभावेन शान्ता। स्वबुद्धिमत्तया, उत्तमैः गुणैः च लोकप्रियतां सम्पादितवती आसीत् सा। समग्रे देशे तस्याः प्रशंसा प्रचलति स्म। कौसल्या यदा प्राप्तवयस्का जाता तदा तस्याः स्वयंवरः करणीयः इति निश्चितवान् राजा।

महामन्त्रिणः पुत्रः सुन्दरेश्वरः। सः नाम्नः अनुगुणं सुन्दरः आसीत्, परममेधावी अपि आसीत्। कौसल्या परिणेतव्या इति तस्य इच्छा। यतः बाल्यतः तयोः परस्परपरिचयः आसीत्। तौ सहैव क्रीडितवन्तौ, सहैव जल्पितवन्तौ। द्वित्रेभ्यः वर्षेभ्यः केवलं तयोः दर्शनं विरलं जातम् आसीत्। सुन्दरेश्वरः सदापि कौसल्यायाः विषये चिन्तयति। किन्तु मुखतः वार्तालापार्थम् अवकाशः न प्राप्तः आसीत्।

एकदा कौसल्या वनविहारार्थं सखीभिः सह निर्गता। तत्समये सुन्दरेश्वरः तस्याः समीपम् आगत्य विनयेन उक्तवान्– "राजकुमारि! मम अन्तरङ्गं भवत्याः पुरतः प्रकटीकरणीयम् इति बहुभ्यः दिनेभ्यः प्रतीक्षां कुर्वन् आसम्। किन्तु अवकाशः न प्राप्तः आसीत्। यदि भवत्याः आक्षेपः न स्यात् तर्हि इदानीम् अहं किञ्चित् निवेदयितुम् इच्छामि। किन्तु आग्रहः नास्ति। यदि न इच्छति तर्हि एतत्क्षणे एव निर्गन्तुं सिद्धः अहम्" इति।

एतत् श्रुतवत्याः कौसल्यायाः आश्चर्यम्। तथापि तं भावं गोपयन्ती सा ततः किञ्चित्कालं निर्गन्तुं सखीः सूचितवती। अनन्तरं सुन्दरेश्वरः कौसल्या च कस्मिंश्चित् लतामण्डपे उपविष्टवन्तौ। किञ्चित्कालं यावत् तौ परस्परं मुखं पश्यन्तौ मौनम् उपविष्टवन्तौ। सुन्दरेश्वरः वक्तुम् आरम्भं कुर्यात् इति प्रतीक्षमाणा आसीत् कौसल्या।



अन्ते सा स्वयं पृष्टवती – "यदर्थं भवान् एतावत्पर्यन्तम् आगमनप्रयासं निरूढवान्, सः वैयक्तिकवार्तालापः कः?" इति।

सुन्दरेश्वरः नम्रैः शब्दैः उक्तवान् – "राजकुमारि! महाराजः कुवलयाश्वः भवत्याः स्वयंवरं घोषयितुम् उद्युक्तः अस्ति। बाल्यतः अपि आवयोः गाढः स्नेहः आसीत् एव। स च सम्बन्धः शाश्वतिकः भवतु इति मम इच्छा। किम् एतत् अनुमतं भवत्या, उत कोऽपि अन्यः विचारः अस्ति?" इति।

सुन्दरेश्वरस्य प्रस्तावं श्रुत्वा कौसल्या क्षणकालम् आलोचनामग्ना आसीत्। अन्ते सा शिरः उन्नीय मन्दस्वरेण उक्तवती - "मम अङ्गीकारं तिरस्कारं वा अनन्तरं सूचयिष्यामि। ततः पूर्वं मया मद्विषये किञ्चित् वक्तव्यम् अस्ति" इति।

"किं तत्?" इति आश्चर्येण पृष्टवान् सुन्दरेश्वरः।

"सर्वं निवेदयामि तावत्, सावधानतया शृणोतु" इति उक्त्वा कौसल्या निवेदनम् आरब्धवती -

पूर्वं मम पितामहः गोविन्दमिश्रः एतं महार्णवदेशं पालयन् आसीत्। चन्दनदेशस्य राजा लक्ष्मणवर्मा तस्य बाल्यमित्रम् आसीत्। मम पिता कुवलयाश्वः यदा विवाहयोग्यः जातः तदा लक्ष्मणवर्मा स्वपुत्र्याः सुनन्दिन्याः प्रतिमां गोविन्दमिश्रसमीपं प्रेषितवान्, 'मम पुत्रीं स्नुषात्वेन अङ्गीकरोतु' इति प्रार्थितवान् च। सुनन्दिनी असाधारणसुन्दरी आसीत् एव। अतः गोविन्दमिश्रः तां स्नुषात्वेन आनेतुम् अङ्गीकृतवान्। कुवलयाश्वः अपि अङ्गीकारं सूचितवान्। विवाहः अपि जातः। विवाहानन्तरं ज्ञातं यत् सुनन्दिनी आकारेण केवलं सुन्दरी, किन्तु तस्याः मनः सर्वथा वक्रम् इति। किन्तु इदानीं किं वा कर्तुं शक्यते? अतः कुवलयाश्वः स्वदौर्भाग्यविषये पश्चात्तापम् अनुभवन् दिनानि यापयति।

एकदा कुवलयाश्वः मृगयार्थम् अरण्यं गतवान्। तत्र सः एकं सिंहम् अनुसरन् परिवारजनेभ्यः पृथग्भूतः अभवत्। अन्ते सः सिंहस्य उपरि बाणं प्रयुक्तवन्। एतेन व्रणितः कुपितश्च सिंहः झटिति परिवृत्य अश्वस्य



उपरि आक्रमणम् अकरोत्, अश्वम् अमारयत् च। तदा कुवलयाश्वः कोपात् खड्गं स्वीकृत्य तस्य उपरि आक्रमणं कृतवान्। एतेन सिंहस्तु मृतः, किन्तु सिंहस्य पदाघातैः सः तीव्रं व्रणितः जातः।

एतादृश्यां स्थितौ एव कुवलयाश्वः ततः प्रस्थितवान्। किन्तु सः बहुदूरं गन्तुं न शक्तवान्। किञ्चिद्दूरं गत्वा सः मूर्च्छया पतितः। समीपे एव पराङ्कुशमुनेः आश्रमः आसीत्। तत्समये आश्रमे मुनेः पुत्री रेवती आसीत्। कुवलयाश्वस्य पतनशब्दं सा श्रुतवती। झटिति आगत्य दृष्टवती च।

पुनः आश्रमं धावन्ती गत्वा घटेन जलम् आनीतवती। कुवलयाश्वस्य मुखे जलसेचनं कृतवती च। यदा कुवलयाश्वः सचेतनः जातः तदा सा हस्तसाहाय्येन तम् उत्थाप्य मन्दम् आश्रमं नीतवती।

आश्रमे तं शाययित्वा आर्द्रवस्त्रेण व्रणानि मार्जितवती। कञ्चन औषधरसं व्रणानाम् उपरि स्थापितवती च। पानार्थम् उष्णं क्षीरं दत्तवती अपि।

कुवलयाश्वः तस्याः आदरातिथ्यं दृष्ट्वा, तस्याः सौन्दर्यं शान्तस्वभावं च दृष्ट्वा अतीव सन्तुष्टः। सः तां पृष्टवान् – "सुन्दरि! भवती मम उपचारं यत् कृतवती तेन अहं नितरां सन्तुष्टः अस्मि। किन्तु भवती का इति मया न ज्ञातम्। कथं भवत्याः अरण्ये वासः?" इति। अत्रान्तरे पूजादिषु मग्नः पराङ्कुशमुनिः पूजादिकं समाप्य तत्र आगतवान्। कुवलयाश्वस्य नामादिकं पृष्ट्वा ज्ञातवान् च।

कुवलयाश्वः तस्यां रात्रौ तत्रैव स्थितवान्। प्रातः तु तस्मिन् उल्लाघता दृश्यते स्म। सः पराङ्कुशमुनिं नमस्कृत्य कृतज्ञतावचनानि उक्त्वा ऋषिकन्यायाः रेवत्याः परिणये इच्छां प्रकटितवान्। मुनिः एतं प्रस्तावं सन्तोषेण अङ्गीकृतवान्। अनन्तरं गान्धर्वविधिना रेवती-कुवलयाश्वयोः विवाहः सम्पन्नः। एतावता कुवलयाश्वस्य परिजनाः तम् अन्विष्यन्तः तत्र आगतवन्तः। तैः सह रेवतीसमेतः कुवलयाश्वः राजधानीं प्रतिगतवान्।




गोविन्दमिश्रः नूतनस्नुषायाः व्यवहारेण अतीव सन्तुष्टः। कुवलयाश्वाय अपि तस्याः व्यवहारः नितराम् अरोचत। सुनन्दिन्यां यत् सुखं तेन न दृष्टं तत् रेवत्यां प्राप्तवान् सः। तौ प्रतिदिनं वार्तालापेन विविधक्रीडाभिः च समयं यापयतः। कदाचित् रेवती स्वकण्ठमाधुर्येण कुवलयाश्वं तोषयति। एतत्सर्वं दृष्ट्वा सपत्नी सुनन्दिनी ईर्ष्याम् अनुभवति।

एवम् एव दिनानि अतीतानि। सुनन्दिनी गर्भवती जाता। तस्मिन् समये रेवती अपि गर्भवती आसीत्। एतत् श्रुतवत्याः सुनन्दिन्याः ईर्ष्या इतोऽपि प्रवृद्धा। सा सरसानामिकां सेविकाम् आहूय उक्तवती - 'रेवत्याः गर्भपातः यथा स्यात् तथा कञ्चित् उपायं सूचयतु' इति। वृद्धा सरसा सुनन्दिन्याः एतत् वचनं श्रुत्वा आश्चर्यचकिता। तथापि सा आत्मानं निगृह्य उक्तवती - "महाराज्ञि! अङ्कुरस्य नाशनेन किं पौरुषं साधितं भवति? पुष्पितं भवतु। तदा पुष्पम् उत्पाट्य नद्यां क्षिपाम" इति। एतदपि युक्तम् एव इति आलोच्य सुनन्दिनी मौनं स्थितवती।

अनन्तरं सरसा रेवत्याः अन्तःपुरं गतवती। सरसायाः पुत्री मालिनी तत्र दासी आसीत्। सा मालिनीं प्रवृत्तं सर्वं निवेद्य रेवत्याः, भाविनः सन्तानस्य च रक्षणे विशेषजागरूकता भवतु इति सूचितवती। रेवती-सुनन्दिन्योः प्रसवकालः सन्निहितः।

किञ्चित्कालानन्तरं रेवती सुनन्दिनी च पुत्रीं प्रसूतवत्यौ। किन्तु दौर्भाग्यं नाम प्रसवानन्तरम् अल्पे एव काले रेवती सन्निपातेन मरणं प्राप्तवती। एतां वार्तां श्रुत्वा सरसा किङ्कर्तव्यतामूढा जाता। तथापि अल्पे एव काले आत्मानं निगृह्य सा कार्यप्रवृत्ता जाता। सुनन्दिन्याः पार्श्वे रेवत्याः पुत्रीं शाययित्वा रेवत्याः पुत्रीं सुनन्दिन्याः पार्श्वे शायितवती। एवं शिश्वोः परिवर्तनं यत् कृतं तत् कोऽपि न ज्ञातवान्।

सुनन्दिनी रेवत्याः मरणवार्तां प्राप्य नितरां सन्तुष्टा। सा तत्क्षणे एव दासीं सरसाम् आहूय एकान्ते उक्तवती - "सपत्नी तु भगवता नीता। चिन्ता परिहृता अभवत्। तस्याः पुत्रीं कुत्रापि दूरं प्रेषयतु, एतत् भवत्याः



उत्तरदायित्वम्'' इति।

''यथाज्ञापयति देवी'' इति उक्त्वा वृद्धा दासी सरसा रेवत्याः पार्श्वे शायितां सुनन्दिन्याः पुत्रीम् उन्नीय सन्तानहीनस्य कुम्भकारस्य गुरुराजस्य गृहस्य पुरतः शाययित्वा प्रत्यागतवती।

कौसल्या एवं स्वकथां निवेद्य उक्तवती – ''एवं सुनन्दिन्याः समीपं प्रापिता रेवत्याः पुत्री अहम् एव। सुनन्दिन्याः पुत्री तु कुम्भकारस्य गृहे वर्धमाना अस्ति। एतत् रहस्यं मां सरसायाः पुत्री मालिनी कदाचित् निवेदितवती। अहं तु सद्यः एव एतं वृत्तान्तं सुनन्दिनीदेवीं निवेदयितुम् इच्छामि। अतः मां यः परिणयेत् सः राज्यं न प्राप्नुयात्। भवता एतत्सर्वं ज्ञातं भवतु इति उद्देशेन मया उक्तम्'' इति।

सुन्दरेश्वरः कौसल्यायाः जीवनवृत्तम् आश्चर्येण शृण्वन् आसीत्। इदानीं तस्य मुखे द्विगुणितः सन्तोषः दृश्यते। सः उत्थाय गच्छन् कौसल्याम् उक्तवान्– ''भवत्याः कथनस्य आशयः सम्यक् ज्ञातः मया। इदानीम् अहं गच्छामि'' इति।

अनन्तरदिने प्रातःकाले काषायवस्त्रधारी, रुद्राक्षमालाधरः, दीर्घश्मश्रुकः कश्चन संन्यासी सुनन्दिन्याः अन्तःपुरस्य पुरतः स्थित्वा उच्चैः उक्तवान् – ''जय जगदीश्वर! मातः सुनन्दिनीदेवि! वयं त्रिकालज्ञाः संन्यासिनः भूतभविष्यद्वर्तमानं समग्रं जानीमः। भवत्याः भविष्यं वक्तुम् अत्र उपस्थिताः च'' इति।

सख्यः एतत् श्रुत्वा त्वरया गत्वा सुनन्दिनीदेवीं दृष्ट्वा संन्यासिनः आगमन-वार्तां निवेदितवत्यः। राज्ञी संन्यासिनम् आदरेण स्वागतीकृतवती। एतदनन्तरं सः संन्यासी परमात्मनः जयकारम् उक्त्वा राज्ञीं पृष्टवान् – ''देवि! भवत्याः एका पुत्री अस्ति खलु?'' इति।

सुनन्दिनी उपहासपूर्वकं हसित्वा उक्तवती– ''मार्गे गच्छन् कश्चित् सामान्यः अपि एतावत् वक्तुं शक्नोति। मम पुत्री अस्ति इति लोकः एव जानाति, किमुत भवान्?'' इति।

तदा संन्यासी गम्भीरेण स्वरेण



उक्तवान्– "देवि! मया वक्तुम् इष्टम् अन्यत् एव। भवती स्वपुत्रीम् अत्र किञ्चित् आहवयति वा?" इति।

सुनन्दिनी कौसल्यायाः आनयनार्थं दासीं प्रेषितवती। क्षणाभ्यन्तरे कौसल्या तत्र उपस्थिता अभवत्। कौसल्यां दृष्ट्वा संन्यासी सुनन्दिनीम् उक्तवान् – "महराज्ञि! एषा भवत्याः औरसपुत्री न" इति।

आश्चर्यचकिता महाराज्ञी उच्चस्वरेण पृष्टवती – "किं वदति भवान्? एषा मम औरसपुत्री न इति?" इति।

संन्यासी निर्विकारचित्तः सन् क्षणकालं नेत्रे, निमील्य मौनं स्थितवान्। अनन्तरं सः– "एषा भवत्याः सपत्न्याः पुत्री। भवत्याः पुत्री कुम्भकारस्य गुरुराजस्य गृहे वर्धमाना अस्ति" इति उक्त्वा कुम्भकारस्य गुरुराजस्य गृहविषये विस्तरेण उक्तवान्।

सुनन्दिनी तत्क्षणे काञ्चित् दासीम् आदिष्टवती– "पत्नीपुत्रीसहितं गुरुराजम् एतत्क्षणे एव अत्र आनयतु" इति। कौसल्या दर्शनमात्रेण एव ज्ञातवती यत् संन्यासिरूपेण आगतः न अन्यः, अपि तु सुन्दरेश्वरः एव" इति। सा तं दृष्ट्वा अतीव सन्तुष्टा।

अत्रान्तरे कुम्भकारः गुरुराजः पत्न्या पुत्र्या च सह तत्र आगतवान्। तस्य पुत्र्याः सुनन्दिन्याः च रूपे विशेषतः साम्यं दृश्यते स्म। इदानीं संन्यासिनः वचने विश्वसितवती सुनन्दिनी। अकस्मात् प्राप्तम् एतं मानसिकम् आघातं सोढुम् अशक्ता सा मूर्च्छिता अभवत्।

परिचारिकाः सुनन्दिन्याः शैत्योपचारं कृतवत्यः। किञ्चित्कालानन्तरं सचेतना सुनन्दिनी कौसल्यां, स्वपुत्रीं च समीपम् आहूय स्वसमीपे उपवेष्टुम् उक्तवती। अश्रूणि स्रावयन्ती संन्यासिनम् उक्तवती सा– "श्रीमन्! भवान् वस्तुस्थितिं ज्ञापयन् मां बहुधा उपकृतवान्" इति।

संन्यासी पुनः एकवारं 'जय जगदीश्वर' इति उक्त्वा ततः निर्गतवान्। अनन्तरं सुनन्दिनी पुत्रीं स्वसमीपे स्थापितवती। कुम्भकाराय अमूल्यानि उपायनानि दत्त्वा सत्कृत्य प्रेषितवती च।

कौसल्याद्वारा प्रवृत्तं सर्वं श्रुत्वा

कुवलयाश्वः अपि सन्तुष्टः। एतदनन्तरं कौसल्यायाः इच्छानुसारं कौसल्या-सुन्दरेश्वरयोः विवाहः सवैभवं सम्पन्नः।

एवं कथां समाप्य वेतालः अवदत्— "राजन्! अन्ते सर्वं सुसम्पन्नम् इत्यतः खेदः कोऽपि नास्ति। तथापि चिन्तयतु — सुन्दरेश्वरः कौसल्यायाः इतिवृत्तं ज्ञात्वा किमपि अन्यत् कृतवान् स्यात् तर्हि महत् कष्टम् अभविष्यत् खलु? अन्तःपुररहस्यं सुन्दरेश्वरं वदन्त्या कौसल्यया किं दोषः न कृतः? राजा कुवलयाश्वः कौसल्यायाः स्वयंवरः आयोजनीयः इति चिन्तयन् आसीत् खलु? सः किमर्थं वा मन्त्रिणः पुत्राय तां दातुं सिद्धः जातः? कौसल्यया महाराजेन च किं मूर्खता न आचरिता? एतेषाम् प्रश्नानां समाधानं जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः उक्तवान्— "सुनन्दिनी कस्याश्चित् दास्याः द्वारा कौसल्यायाः मूलं ज्ञातवती यदि स्यात् तर्हि कौसल्यायाः कष्टम् अभविष्यत्। अतः एव कौसल्या आत्मनः परिणयम् इच्छन्तं सुन्दरेश्वरम् उक्तवती। एतेन सुन्दरेश्वरस्य प्रामाणिकतायाः परीक्षा अभवत्, कौसल्यायाः रक्षणम् अपि अभवत्। सुन्दरेश्वरः तु संन्यासिवेषेण आगत्य सर्वेषां पुरतः रहस्योद्घाटनं कृतवान्। एतस्य रहस्यस्य प्रचारः यदि भवेत् तर्हि स्वस्य औरसपुत्र्याः एव अगौरवम् इति आलोच्य सुनन्दिनी स्वव्यवहारे परिवर्तनम् आनीतवती। राजा कुवलयाश्वः तु पुत्र्याः हितम् इच्छति। तत्रापि कौसल्या प्रियपत्न्याः रेवत्याः पुत्री। तस्याः मनःखेदम् अनिच्छन् कुवलयाश्वः तया इष्टाय मन्त्रिकुमाराय तां दत्तवान्। संन्यासिवेषेण आगत्य रहस्यम् उद्घाटयता सुन्दरेश्वरेण अपूर्वं कौशलं प्रदर्शितम्। तादृशः धैर्यवान् प्रज्ञावान् च जनः विरलः एव" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् आश्रितवान्।



चन्दमामानुबन्धः - २

# ज्ञानभाण्डागारम्

एतन्मासीयम् ऐतिहासिकं व्यक्तित्वम्–

## सूरदासः



सूरदासः इतरेभ्यः कविभ्यः भिन्नः कश्चन कविः। तस्य जन्मदिनं १-१२-१४८४ इति प्रसिद्धिः अस्ति। सः अन्धः आसीत्। सः कृष्णस्य अन्येषां च गणकर्मविषयं बहुधा वर्णयन् पद्यानि रचितवान्, येषां पठनेन तस्य अन्धत्वे विश्वसितुम् एव न शक्यते। सः अर्न्तदृष्ट्या एतत्सर्वं लेखितुं शक्तः अभवत् इति भाति।

'सः आग्रा-मथुरयोः मध्ये स्थिते 'रुनुक्ता' इत्यस्मिन् प्रदेशे जातः' इति वदन्ति केचन। अन्ये केचन वदन्ति – 'सः देहलीसमीपे स्थिते 'सिहि' प्रदेशे जातः' इति। अन्ये अभिप्रयन्ति यत् तस्य पिता अकबरस्य आस्थाने गायकः आसीत् इति। अन्यया कथया ज्ञायते – पृथ्वीराजचौहान् राजस्य आस्थानकवेः चान्दबर्डेनामकस्य सेवकः आसीत् इति। एवं हि श्रूयते – सूरदासस्य भ्रातरः कैश्चित् आक्रमणकारैः सह युद्धार्थं गताः न प्रत्यागताः। तेषाम् अन्वेषणार्थं गतः सूरदासः कस्मिंश्चित् कूपे पतितः। तस्मिन् कूपे तेन षट् दिनानि यापितानि। तत्रैव सः कृष्णस्य ध्यानं कृतवान्, अपूर्वान् अनुभवान् प्राप्तवान् चापि। कूपतः कथं बहिः आगतम् इति सः स्वयमपि न जानाति। तदारभ्य तेन कदापि भगवतः कृष्णस्य गानं न त्यक्तम्। तस्य पद्यानि 'सूरसागर' नाम्ना प्रकाशितानि। तत्र पञ्च सहस्रं पद्यानि सन्ति। तेन इतोऽपि अधिकानि रचितानि स्युः इति ऊह्यते।

एवम् अपि श्रूयते यत् सूरदासः मातापितृभ्यां सह मथुरां गत्वा प्रसिद्धस्य सतः वल्लभाचार्यस्य शिष्यः जातः इति।

## सः कः स्यात्?

पश्चिमे दिगन्ते सूर्यः अस्तं गच्छन् अस्ति। शान्तः सन्ध्याकालः सः। क्षेत्रतः किञ्चिद्दूरे धेनवः आगच्छन्त्यः सन्ति। सर्वं शान्तं दृश्यते।

द्वयोः ग्रामयोः मध्ये स्थितं व्रीहिक्षेत्रं क्रममाणः अस्ति कश्चन अल्पवयस्कः बालः। पश्चिमे आकाशे कश्चन लघुमेघः अदृश्यतां गच्छतः सूर्यस्य सुवर्णवर्णान् किरणान् प्रतिबिम्बयति। सर्वं परमरमणीयम्! बालः एतत्सर्वं विस्मयेन पश्यति। एतस्य अपूर्वसृष्टिसौन्दर्यस्य आस्वादनार्थम् अवकाशः दत्तः यत् तदर्थं सः भगवते प्रणामान् समर्पयति।

ततः सः बालः मेघाभिमुखम् उड्डयमानानां पक्षिणां गणं दृष्टवान्। अस्मिन् शान्ते चेतोहरे च सूर्यास्तसमये तेषां पक्षिणां तत् रमणीयम् उड्डयनं दृष्ट्वा बालः अतीव सन्तुष्टः। सः एतत् दृश्यं पश्यन् आत्मानं विस्मृतवान्। सः तत्र तिष्ठति, किन्तु बाह्यप्रज्ञानम् एव नास्ति तस्य। तन्मयावस्था, समाधिस्थितिः इति वा या उच्यते ताम् अवस्थाम् अनुभवति सः। अनन्तरकाले एतादृशम् अनुभवं पुनः पुनः प्राप्तवान् सः। श्रेष्ठः संन्यासी इति ख्यातिं गतश्च।

एतादृशः सः कः स्यात्?

(उत्तरम् अष्टमे पृष्ठे)

# विज्ञानविनोदः



मन्दप्रकाशे



शुभ्रप्रकाशे

# नेत्रचर्या

**एवं करणीयम् –**

शुभ्रे प्रकाशे तिष्ठन् भवान्, नेत्रं निमील्य स्थातुं मित्रं सूचयतु। द्वित्राणां निमेषाणाम् अनन्तरं नेत्रोन्मीलनार्थं तं सूचयतु। शुभ्रे प्रकाशे तदीयं नेत्रं कथं प्रतिक्रियां प्रदर्शयति इति भवान् परिशीलयतु।

**किं भवति, किमर्थं च भवति?**

नेत्रोन्मीलनसमनन्तरम् एव मित्रस्य नेत्रस्य तारकं विशालं दृश्यते। किन्तु अनन्तरकाले प्रकाशप्रभावतः तत् लघुतां प्राप्नोति। अत्र कारणं तु एवम् – नेत्रतारकं परितः कनीनिकाप्रदेशे वलयाकारकाः केचन भागाः भवन्ति। यदा शुभ्रप्रकाशः सम्मुखं भवति तदा ते भागाः विशालतां प्राप्यनेत्रतारकस्य कञ्चन भागम् आवृत्य तिष्ठन्ति। तदा नेत्रतारकस्य अल्पः भागः केवलं दृश्यते। यदि भवान् समीपतः अवलोकते तर्हि शुभ्रे प्रकाशे जायमानाम् एतां नेत्रस्य सहजां प्रक्रियां द्रष्टुं शक्नोति।

छायाचित्रग्राहकयन्त्रस्य स्वयञ्चालिता कवाटव्यवस्था यथा भवति तथैव भवति नेत्रकनीनिकायाः व्यवहारः अपि। यदा प्रकाशः मन्दः तदा अधिकस्य प्रकाशस्य प्रवेशार्थं तत्र अवकाशः। यदा प्रकाशः शुभ्रः तदा अल्पप्रमाणेन प्रकाशः यथा अन्तः प्रविशेत् तथा आवृत्य तिष्ठति। भवान् जानीयात् एव यत् यावत् नेत्रं शुभ्रप्रकाशे समञ्जनं प्राप्नोति तावत् मानवः तात्कालिकतया अन्धः इव भवति इति।

मानवस्य कनीनिका इव मार्जारस्य कनीनिका अपि व्यवहरति। किन्तु मानवनेत्रे इव प्रकाशम् अपवारितं न करोति। मार्जारस्य नेत्रे कनीनिकाभागानां प्रतिक्रिया का इति ज्ञातुं मार्जारनेत्रं प्रत्यक्षं पश्यतु। मार्जारस्य नेत्रतारकं मानवनेत्रतारकात् आकारेण भिन्नम् इति अंशं परिशीलयतु च।

मार्जारस्य नेत्रे इव शुनकस्य नेत्रे कनीनिकाभागानां व्यवहारः भवति किम्? कुतो वा भवता एतत् स्वप्रयत्नेन न ज्ञातव्यम्?



# विश्ववैचित्र्यम्

(गतसञ्चिकायां वयं 'पिरमिड्' विषये उक्तवन्तः।)

## बेबिलोन्प्रदेशस्य उद्यानानि

एवं हि श्रूयते यत् सेमिरमीस् अस्सीरियादेशस्य राजकुमारी। सा अथर्गतीस्नामिकायाः मत्स्यदेवतायाः पुत्री। सा पारावतैः पालिता पोषिता च। सिरियाराजस्य मेषपालः तां दृष्ट्वा तस्याः पोषणदायित्वम् अङ्गीकृतवान्। अनन्तरकाले सा राजानं परिणीतवती। राज्ञः मरणानन्तरं स्वयं सिंहासनम् आरूढवती च। सा बहूनि राज्यानि जितवती। तस्याः एकं तु दुःखम आसीत यत भारतं जेतुं मया न शक्तम् इति।

सा बहूनि स्मारकाणि, दुर्गमेषु पर्वतेषु मार्गान् च निर्मापितवती। 'ह्यांगिंग् गार्डन्स' इति प्रसिद्धानि बेबिलोन्प्रदेशे स्थितानि मनोहराणि उद्यानानि एतया एव निर्मितानि इति प्रसिद्धिः अस्ति लोके।

एतानि उद्यानानि चतुरस्राकारेण सन्ति। एकस्य पार्श्वस्य दैर्घ्यं च ७०० द्वादशाङ्गुलं भवेत्। स्थूलानां स्तम्भानाम् आधारेण बहुवट्टात्मकतया अत्युन्नतरूपेण निर्मितानि सन्ति एतानि। अत्युत्कृष्टतया सुव्यवस्थिततया च कृता अत्रत्या जलसेचनव्यवस्था सस्यानि सदा हरितमयानि स्थापयति।

ऐतिहासिकव्यक्तित्वयुता सेमिरमीस् क्रिस्तात् ७०० वर्षेभ्यः पूर्वम् आसीत्।

अन्या अपि काचित् प्रथा श्रूयते यत् एतानि उद्यानानि क्रिस्तात् पूर्वं षष्ठे शतके स्थितेन, अस्सीरियाराजेन सुप्रसिद्धेन नेबुचद्नझरमहोदयेन निर्मितानि इति।

तस्य राज्ञीषु अन्यतमा पर्वतप्रदेशात् आगता, अन्तःपुरे हरितमयवातावरणस्य अभावात् खिन्ना, तस्याः च तृप्त्यर्थं राजा एतानि उद्यानानि निर्मितवान् इति श्रूयते।



# चीनादेशात् आगतः

विविधानि मूलानि आधारीकृत्य जगतः इतिहासः रचितः अस्ति। तेषु मूलेषु यात्रिकाणाम् अनुभवः अपि अन्यतमः।

प्राचीने काले प्रवासः कष्टकरः अपायकरः च भवति स्म। किन्तु इदानीन्तनस्य प्रवासस्य अपेक्षया रोमाञ्चकः अपि भवति स्म। एषु दिनेषु जनाः विनोदार्थं दृश्यवीक्षणार्थं च प्रवासं कुर्वन्ति। किन्तु पूर्वकाले तु प्रवासस्य मूलं कारणद्वयं भवति स्म – वाणिज्यं ज्ञानान्वेषणं च इति।

सप्तमे शतके चीनादेशतः कश्चित् पण्डितः भारतम् आगतवान्। तस्य नाम 'ह्यूयन् त्साङ्ग्' इति। बौद्धदार्शनिकः सः बुद्धधर्मविषये विशेषज्ञानं प्राप्तुम् अत्र आगतः आसीत्। सः स्वप्रवाससमये प्राप्तान् अनुभवान् दृष्टं सर्वं च लिखितवान् अस्ति।

सः अपायकरीं 'गोबी' मरुभूमिं



# श्रेष्ठः यात्रिकः



क्रान्तवान्। बहून् अपायान् सम्मुखीकुर्वन् सः अपूर्वं 'टर्फान्' नामकं नगरं प्राप्तवान्। तच्च नगरं संस्कृतेः आश्रयस्थानं, संस्कृतस्य बौद्धधर्मस्य च आगरम् आसीत्। (तच्च नगरम् इदानीम् अपि तत्र अस्ति, किन्तु सा प्रसिद्धिः अस्तङ्गता अस्ति।)

भारतस्य प्राप्त्या सः परमसन्तुष्टः विस्मितश्च। परमसन्तोषस्तु बुद्धभूमेः दर्शनात् उत्पन्नः, विस्मयस्तु अस्य देशस्य वैभवस्य संस्कृतेश्च परिचयात् अभवत्, तत्काले भारतस्य भूयान् भागः राज्ञः हर्षवर्धनस्य शासनाधीनम् आसीत्।

एतस्य विषये जवहरलाल् नेहरूमहोदयः स्वकीये 'ग्लिम्प्सस् आफ् वर्ल्ड् हिस्टरी' नामके ग्रन्थे एवं लिखति–

"सः परमनिष्ठावान् बौद्धः, बुद्ध-सम्बन्धिक्षेत्राणि द्रष्टुं, शास्त्रग्रन्थान् नेतुं च अत्र आगतवान्। 'गोबी' मरुभूमिम् अतिक्रम्य गच्छन् ताष्कण्ड्, समरकण्ड्, बल्ख्, खोतान्, यार्कण्ड् इत्यादीनि बहूनि प्रसिद्धानि नगराणि दृष्टवान्। समग्रे भारते देशे, सिलोन् मध्ये च तेन प्रवासः कृतः। विस्मयकरे तस्य पुस्तके आत्मना सूक्ष्मया दृष्ट्या दृष्टानां प्रदेशानां विवरणम् अस्ति। समग्रभारतस्य जनानां चरित्रचित्रणं-यच्च इदानीम् अपि वयं सत्यम् इति भावयामः, आत्मना श्रुताः अपूर्वाः कथाः, बुद्धबोधिसत्त्वयोः विषये श्रुताः असङ्ख्या अद्भुतकथाः चापि तेन स्वपुस्तके उल्लिखिताः सन्ति। ....

बहूनि वर्षाणि यावत् तेन भारते, तत्रापि विशिष्य पाटलीपुत्रसमीपे स्थिते नलन्दाविश्वविद्यालये स्थितम्। नलन्दा-विश्वविद्यालयः बौद्धविहारश्चापि आसीत्। तत्र १०,००० छात्राः संन्यासिनः च तिष्ठन्ति स्म। एषः विश्वविद्यालयः बौद्धधर्मशिक्षणविषये प्रमुखं केन्द्रं ब्राह्मणविद्याभ्यासार्थं प्रसिद्धस्य काशीविश्वविद्यालयस्य प्रतिस्पर्धी च आसीत्।

# भारतीये इतिहासे कटाक्षपातः



१. देहलीराज्यस्य अन्तिमः हिन्दूराजः कः?

(अ) तस्य विषये का कथा प्रसिद्धा अस्ति?

(आ) कः हिन्दूराजः तस्य वैरी अभवत्?

(इ) तस्य वैरिणः का गतिः जाता?

२. स्वमरणसमये पुत्रीम् उत्तराधिकारित्वेन नियुज्य मरणं गतः देहलीशासकः कः?

(अ) तस्य पुत्र्याः नाम किम्?

(आ) सा कं परिणीतवती?

(इ) तयोः दम्पत्योः किम् अभवत्?

३. १८शतके देहलीम् आक्रान्तवान्, ३०,००० जनानां मरणस्य कारणीभूतश्च कः?

(अ) तस्य अनन्तरं कः देहलीं शासितवान्?

(आ) तेन प्राप्तस्य प्रसिद्धस्य सिंहासनस्य नाम किम्?

(इ) तेन स्वीकृतम् उत्तमं वस्तु किम्? कथं स्वीकृतम्?

(उत्तराणि अष्टमे पृष्ठे)

# परीक्षन्ताम् आत्मनः सामान्यज्ञानम्

१. १९८८तमे वर्षे भातरस्य कस्यचित् धूमशकटनिःस्थानभवनस्य शततमं वर्षं सवैभवम् आचरितम्। तस्य निःस्थानस्य नाम किम्? किमर्थं तस्य तन्नाम?

२. 'हेम्लाक्' इति पेयं कस्मैचित् पाश्चात्यपण्डिताय दत्तम्। सः कः? पेयस्वीकरणेन कः परिणामः जातः?

३. स्वातन्त्र्यप्राप्तितः पूर्वं 'घाना'देशस्य नाम किम् आसीत्?

४. 'नेषनलिस्ट् चैना' इति राजकीयपरिभाषया प्रसिद्धस्य भूभागस्य वास्तविकं नाम किम्?

५. के के देशाः 'बेनिलक्स् देशाः' इति प्रसिद्धाः?

६. चन्द्रः भूमितः कियद्दूरे अस्ति?

७. आधुनिकपरिभाषया 'कास्मिकवर्षम्' इत्यस्य किं विवरणम्?

८. प्रपञ्चस्य अतिमहान् देशः कः?

९. प्रपञ्चस्य परमलघुः भूप्रदेशः कः?

१०. 'गेलक्सी' (Galaxy) नाम किम्?

(उत्तराणि अष्टमे पृष्ठे)




१.सः नाटककारः कः, यस्य च अदृश्यरूपेण स्थितानि रूपकाणि १९१२तमे संवत्सरे प्राप्तानि?

(अ) तेषाम् अन्वेषणं केन कुत्र कृतम्?

(आ) तानि रूपकाणि कति?

२.यमम् उद्दिश्य मृत्युरहस्यं पृष्टवान् अल्पवयस्कः बालकः कः?

(अ) एतत्सम्बन्धिनी कथा कुत्र उपलभ्यते?

(आ) यस्मिन् ग्रन्थे एषा कथा प्राप्यते, तस्य ग्रन्थस्य नाम्नः अर्थः कः?

३.वाल्मीकिरामायणस्य सुप्रसिद्ध रूपान्तरे के?

४.प्राचीनः राजाः सः कः, यस्य च नाम कस्याञ्चित् सुप्रसिद्धकथामालायां श्रूयते?

(अ) तस्याः कथामालायाः नाम किम्?

(आ) सा च कथामाला कस्य ग्रन्थस्य आधारेण रचिता?

(उत्तराणि अष्टमे पृष्ठे)

## जानीम एकं शब्दं प्रमुखासु भारतीयभाषासु

**आसामी** - मनुहा, **बंगाली** - मानूस, **इंग्लीष्** - मेन्, **गुजराती** - माणस्, **हिन्दी** - आदमी, **कन्नड** - मनुष्य, **काश्मीरी** - महन्यु, **मलयालम्** - मनुष्यन्, **मराठी** - माणूस, **उडिया** - मनीष, **पञ्जाबी** - मनुख, **संस्कृतम्** - मनुष्यः (मानवः), **सिन्धी** - माणहू, **तमिळ्** - मनिदन, **तेलुगु** - मनिशी, **उर्दू** - आदमी।

## अपि भवान् विश्वसिति?

१. यत् समग्रं रामायणं वाल्मीकिना एव रचितम् इति?
२. यत् फ्रान्केस्टाइन् कश्चन भयङ्करः प्राणी इति?
३. यत् प्रपञ्चे अतिमहान् प्राणी राक्षसगोधिका (डिनोसार्) एव इति?

## न तथा !

१. उत्तरकाण्डे वर्णितः सीतापरित्यागः, सीतायाः वनवासः इत्यादिकम् अन्येन केनचित् लिखितं, न तु वाल्मीकिना। यतः उत्तरकाण्डस्य शैली भिन्ना एव दृश्यते। किन्तु सोऽपि कविः प्रतिभाशाली इत्यत्र नास्ति विवादः।
२. फ्रान्कोस्टाइन् – मेरी शेलेद्वारा लिखितस्य, तन्नाम्ना एव प्रसिद्धस्य उपन्यासस्य एकं पात्रम्। सः मनुष्याणाम् अवयवान् एकत्रीकृत्य तत्र प्राणप्रतिष्ठां करोति स्म। एवं क्रमेण तेन कश्चन राक्षसप्राणी निर्मितः, तेनैव खादितः अभवत् च। कालान्तरे 'फ्रान्केस्टाइन्' इत्यस्य अर्थः भयङ्करप्राणी इति अभवत्।
३ नीलतिमिङ्गिलः एव प्रपञ्चे अतिमहान् प्राणी। तस्य दैर्घ्यं भवति ३० मीटर्, भारश्च प्रायः १७५ टन् भवेत्।

# उत्तराणि

## सः कः स्यात्?

श्री रामकृष्ण परमहंसः, यस्य च पूर्वाश्रमस्य नाम आसीत् गदाधरः इति।

## इतिहासः

१. पृथ्वीराज चौहान्।
(अ) संयुक्तां स्वयंवरमण्डपात् अपहृत्य अश्वस्य उपरि आरोप्य नीतवान्, ताम् एव परिणीतवान् च। (आ) जयचन्दः, यश्च कनौजराजः, संयुक्तायाः पिता च। (इ) जयचन्दः महम्मदघोरी साहाय्येन देहल्याः उपरि आक्रमणं कर्तुम् उद्युक्तः। पृथ्वीराजः घोरीं पराजितवान्, तं बन्दिनं कृतवान्। पुनः बन्धविमुक्तं चापि कृतवान्। अपमानितः घोरी ११९२तमे वत्सरे पुनरपि देहल्याः उपरि आक्रमणं कृतवान्। पृथ्वीराजं पराजितवान् मारितवान् चापि। अनन्तरवर्षे सः जयचन्दम् अपि मारयित्वा कनौजदेशं स्वायत्तीकृतवान्।
२. अलतुमश्।
(अ) रझिया सुल्ताना। (आ) अलतुनिया नेतृत्वे तस्याः सेनानायकाः विरोधम् आचरितवन्तः। किन्तु रझिया महता चातुर्येण अलतुनियं प्रेमपाशेन बद्धवती, तम् एव परिणीतवती च। (इ) अन्ये सेनानायकाः तौ दम्पती मारितवन्तः।
३. पर्शियाराजः नादिरशाह।
(अ) मुगलवंशीयः मोहम्मद शाह। (आ) मयूरसिंहासनम् इति। (इ) कोहिनूरुवज्रम्। मुलगचक्रवर्ती तत् वज्रम् उष्णीषे गोपितवान् आसीत्। नादिरशाह उष्णीषपरिवर्तनं करवाव इति सूचयित्वा तत् अमूल्यं वज्रं स्वायत्तीकृतवान्।

## सामान्यज्ञानम्

१. विक्टोरिया टर्मिनस् विक्टोरिया-महाराज्ञ्याः स्वर्णजयन्त्युत्सवसन्दर्भे एतत् निर्मितम् आसीत्।
२. सः भवति साक्रेटिस्। 'हेम्लाक्' विषमयं पेयम् आसीत्। अतः तस्य पानेन सः मरणं प्राप्तवान्।
३. गोल्ड् कोस्ट्।
४. तैवान् इति, फोर्मोसा इति वा।
५. बेल्जियम्, नेदर्ल्याण्ड्स्, लुक्जेम्बर्ग् च।
६. २३८,८५५ मैल् दूरे।
७. प्रतिकलं (सेकेण्ड्) २५० कि.मी. वेगेन गच्छन् अपि सूर्यः २५० दशलक्ष (मिलियन्) वर्षेषु स्वनक्षत्रमण्डलस्य परिक्रमणं करोति। एतं कालं कास्मिकवर्षनाम्ना व्यवहरन्ति।
९. वेटिकन्नगरम्।
१०. गुरुत्वाकर्षणेन बद्धानां नक्षत्राणां कश्चन विशालः समूहः।

## साहित्यम्

१. भासः, यः क्रिस्तात् पूर्वं पञ्चमे शतके आसीत्। (अ) पण्डितगणपतिशास्त्री केरले तानि अन्विष्टवान्। (आ) त्रयोदश।
२. नचिकेताः।
(अ) कठोपनिषदि। (आ) 'उपनिषत्' इत्यस्य शब्दस्य अर्थः 'समीपे उपवेशनम्' इति। तात्पर्यं तु एवं भवति – 'गुरोः समीपे उपविश्य पठितुं ये योग्याः तान् उद्दिश्य बोधितं तत्त्वम्' इति।
३. तमिळुभाषानिबद्धं कम्बरामायणं, हिन्दीभाषानिबद्धं तुलसीदासविरचितं रामचरितमानसं च।
४. राजा विक्रमादित्यः।
(अ) वेतालपञ्चविंशतिः। (आ) कथासरित्सागरस्य।



काव्यकथा -

# मणिमञ्जीरम्-२

पूम्पुहारनगरस्य युवकः वणिक् कोवलन् समुद्रवणिजः पुत्रीं कण्णगीं परिणीतवान्। माधवी नाम युवतिः स्वनृत्याभ्यासं समापितवती। राज्ञः, नगरस्य प्रमुखाणां च सम्मुखे सा स्वनृत्यविद्यायाः प्रथमप्रदर्शनं कृतवती।

स्वनृत्यकलया माधवी प्रेक्षकान् मन्त्रमुग्धान् कृतवती। कार्यक्रमस्य अन्ते सर्वे उत्साहेन करताडनं कृतवन्तः। माधव्याः नृत्यकलाकौशलं बहुधा प्रशंसितवन्तः अपि।





नृत्येन सन्तुष्टः राजा माधव्यै मरकतमणिखचितां मालां सहस्रं सुवर्णनाणकानि च पुरस्काररूपेण दत्तवान्। एतेन माधव्याः प्राप्तस्य सन्तोषस्य सीमा एव न आसीत्।



तत्कालीनसम्प्रदायानुगुणं कलाकारिण्या तया राज्ञा पुरस्काररूपेण दत्तः सः हारः धनिकाय कस्मैचित् विक्रेतव्यः आसीत्। माधवी हारं स्वसख्याः हस्ते अर्पयन्ती उक्तवती– "सन्ध्यासमये धनिकसञ्चारयोग्ये मार्गे एतस्य हारस्य विक्रयणं करोतु" इति।

यः तं हारम् एकसहस्रेण सुवर्णनाणकैः क्रीणाति तस्य प्रीतिपात्रं भवति माधवी। तादृशस्य पुरुषस्य निमित्तं केवलं सा नर्तिष्यति गास्यति च। एषः तत्कालीनः सम्प्रदायः आसीत्। कोवलन् तु माधव्याः नृत्येन बहुधा आकृष्टः आसीत्। अतः सः माधव्याः सखीतः तं हारं क्रीतवान्।





माधव्याः सख्या सह कोवलन् माधव्याः कलामन्दिरं प्रविष्टवान्। माधवी महता आदरेण प्रेम्णा च तस्य सत्कारं कृतवती। अपूर्वैः नृत्यसङ्गीतादिभिः सा कोवलनं सन्तोषितवती। माधव्याः सौन्दर्यातिशयं नृत्यकुशलतां च दृष्ट्वा कोवलन् नितरां व्यामुग्धः।

एवं नृत्यसङ्गीतास्वादनार्थं कोवलन् माधव्याः सम्पर्के आगतः, सत्यम्, किन्तु क्रमशः सः तस्याः प्रेमजाले पतितः। माधवी तं पतिम् इव भावितवती। उभौ अपि सकलं विस्मृत्य प्रेमव्यवहारे नितरां निमग्नौ। कोवलनस्य अधिकः समयः माधव्याः गृहे एव यापितः भवति स्म।





एवं प्रेमपाशेन बद्धौ तौ कदाचित् नगरभ्रमणार्थं निर्गच्छतः। नगरस्य विशेषदृश्यानि पश्यन्तौ तौ मायास्तम्भसमीपं गतवन्तौ। तस्य स्तम्भस्य परिक्रमणं यः करोति सः सर्पविषतः मनोव्याकुलत्वतः पिशाचपीडातः च निर्मुक्तः भवति। तौ तस्य स्तम्भस्य परिक्रमणं कृतवन्तौ।

तत्रत्ये उद्याने काचित् विशिष्टा मूर्तिः आसीत्। यदि राजा जानन् अजानन् वा अधर्माचरणं कुर्यात् तर्हि मूर्तेः नेत्राभ्याम् अश्रूणि आगच्छन्ति। अतः राजा सदा धर्ममार्गेण गच्छति। राजानम् अनुसृत्य प्रजाः अपि धर्ममार्गम् अनुसरन्ति। तेन देशे सर्वत्र सुखशान्त्यादयः व्याप्ताः आसन्।





नगरस्य मध्यभागे किञ्चन अपूर्वं सरोवरम् आसीत्। जनानां विश्वास आसीत् यत् तस्मिन् सरोवरे यः स्नानं करोति तस्य सर्वे रोगाः अपगताः भवन्ति इति। तत्र स्नानेन मूकाः वक्तुं शक्नुवन्ति, बधिराः च शृण्वन्ति। एतादृशानि अपूर्वाणि स्थलानि पश्यन्तौ कोवलन् माधवी च सन्तोषेण समयं यापयतः। एतादृशानां विहाराणां भोजनकूटानां च निमित्तं कोवलन् समग्रं सम्पत्तिं व्ययीकृतवान्।

सन्ध्यासमये ग्रीस्प्रभृतिभ्यः देशेभ्यः आगतानां नौकानां दीपाः रत्नानि इव प्रकाशन्ते। स्थानीयानां नौकानां दीपाः तां शोभां वर्धयन्ति। प्रासादस्य चन्द्रशालायां स्थित्वा शीतलवायोः स्पर्शसुखम् अनुभवन्तौ कोवलन् माधवी च एतत् अपूर्वं दृश्यं पश्यतः। सन्ध्यां गहनरात्रिरूपेण परिवृत्ताम् अपि तौ न जानीतः।





कोवलन् माधवी च एवं सुखेन दिनानि यापयतः। अपरत्र मन्दभाग्या कण्णगी गृहे उपविश्य मौनम् असहनीयां व्यथाम् अनुभवति। एवं स्थिते अपि सा पत्युः दुर्व्यवहारविषये कमपि किमपि न उक्तवती। आभरणानि एकैकशः विक्रीय गार्हस्थ्यजीवनस्य व्ययं निर्वहति सा। क्रमशः सर्वाणि आभरणानि समाप्तानि अभवन्

–(अनुवर्तते)



# पिशाचक्रीडा

कदाचित् रामभद्रपुरस्य साप्ताहिकं वाणिज्यं समाप्य प्रस्थितौ चारुदत्तः सीता च सायङ्कालसमये कस्याश्चित् नद्याः तीरं प्राप्तवन्तौ। वस्तुतः प्रस्थाने विलम्बः जातः आसीत्। आकाशे पश्चिमदिक्तः मेघाः आगच्छन्तः सन्ति। नद्याः प्रवाहस्य वेगः अपि महान् दृश्यते। सकुशलं गृहप्राप्तिः कथम् इति तयोः समस्या।

आकाशे कृष्णाः मेघाः सान्द्रतया दृश्यन्ते। स्वग्रामस्य प्राप्त्यर्थम् इतोऽपि क्रोशद्वयं गन्तव्यम् अस्ति ताभ्याम्। महत्याः वृष्टेः सम्भावना स्फुटं दृश्यते। इदानीं किं करणीयम् इति तौ चिन्तयतः।

समीपे एव ताभ्याम् एकं पुरातनं गृहं दृष्टम्। गृहे जनवसतिः न दृश्यते स्म। चारुदत्तः समीपं गत्वा वातायनद्वारा अन्तः दृष्टिं प्रसारितवान्। गृहं रिक्तम् इति तेन ज्ञातम्। एतावता वृष्टिबिन्दूनां पतनम् आरब्धम्। अतः तौ गृहस्य अन्तः गतवन्तौ।

गृहे निश्शब्दता आसीत्। जीर्णावस्था स्फुटं दृश्यते स्म। चारुदत्तः ,सीता च स्वकीयानि वस्तूनि एकत्र स्थापितवन्तौ। सीता विपणितः क्रीतां सम्मार्जनीं स्वीकृत्य गृहस्य एकं प्रकोष्ठं स्वच्छीकृतवती। अनन्तरं तौ स्ववस्तूनि तस्मिन् प्रकोष्ठे कोणे स्थापितवन्तौ। विश्रान्त्यर्थम् उभौ अपि पादौ प्रसारितवन्तौ।

बहिः धाराकारेण वृष्टिः दृश्यते। मध्ये मध्ये मेघगर्जनं विद्युत्स्फुरणं चापि दृश्यते। भवनं जीर्णावस्थायाम् अस्तीत्यतः छदितः जलबिन्दवः एकैकशः 'टप्' इति प्रकोष्ठे अपि पतन्ति।

चारुदत्तः उत्थाय वातायनद्वारा बहिः दृष्टिं प्रसार्य उक्तवान्– "बहिः



घनान्धकारः। वृष्टिः स्थगिता चेदपि अस्मिन् अन्धकारे मार्गान्वेषणं कष्टकरम् एव'' इति।

एकघण्टायाः अनन्तरं वृष्टिः स्थगिता। चतसृभ्यः दिग्भ्यः इदानीं मण्डूकानां टरटर्ध्वनिः श्रूयते। दूरात् शृगालानां रवः श्रूयते। अतः निर्जने गृहे स्थितयोः तयोः दम्पत्योः मनसि काचित् भीतिः।

तस्मिन् एव समये अकस्मात् तयोः नेत्रयोः पुरतः विचित्रः प्रकाशः उद्गतः। उभौ अपि भीत्या नेत्रनिमीलनं कृतवन्तौ। क्षणकालस्य अनन्तरं यदा नेत्रम् उद्घाटितं तदा तयोः पुरतः त्रयः पिशाचाः दृष्टाः। पिशाचदर्शनेन दम्पती कम्पितौ जातौ। इदानीं किं करणीयम् इति तौ न जानीतः। शोचनीया परिस्थितिः तयोः। उपस्थितायाः परिस्थितेः सम्मुखीकरणं विना का अन्या गतिः इदानीम्?

तदा तेषु अन्यतमः पिशाचः अवदत्— ''भीतिः मास्तु। वयं हानिकारकाः सर्वथा न। समययापनार्थं भवद्भ्यां सह काञ्चित् क्रीडां क्रीडितुम् इच्छामः, तावदेव'' इति।

पिशाचस्य क्रीडाप्रस्तावं श्रुत्वा द्विगुणितां भीतिम् अनुभूतवन्तौ तौ दम्पती। तदा समग्रः प्रकोष्ठः उज्ज्वलया कान्त्या प्रकाशमानः जातः।

सः पिशाचः पुनः अवदत्— ''अये मित्र! सावधानतया शृणोतु। वयं त्रयः इदानीं भवतः पत्नी इव आत्मानं परिवर्तयामः। तदा अस्मासु चतुर्षु भवतः पत्नी का इति भवता विचिन्त्य वक्तव्यम्। एतस्याः क्रीडातः भवतोः कस्यापि प्राणहानिः न भवति। समययापनार्थम् एषा क्रीडा'' इति।

तस्मिन् एव समये सा अपूर्वा कान्तिः लुप्ता, सर्वत्र अन्धकारः व्याप्तः अभवत्। क्षणद्वयस्य अनन्तरं पुनः कान्तिः आगता। इदानीं चारुदत्तस्य पुरतः चतस्रः स्त्रियः स्थिताः सन्ति। चतसृणाम् अपि समाना आकृतिः!

चारुदत्तः किञ्चित् अग्रे गत्वा दृष्टवान्। तासु स्वपत्नी का इति ज्ञातुं तेन सर्वथा न शक्तम्। सः नेत्रे विशालीकृत्य पश्यन् स्थितवान्।

तदा अकस्मात् तासां नृत्यम् आरब्धम्।



चारुदत्तस्य तु आश्चर्यम् – एतासु अन्यतमा मम पत्नी नृत्यं कथं ज्ञातवती इति। सर्वं पिशाचानां चमत्कारः इति सः चिन्तितवान्।

किञ्चित्कालानन्तरं तासां नृत्यं स्थगितम्। पिशाचाः निजरूपेण स्थितवन्तः। "हा हन्त!" इति उद्गारं प्रकटयन्ती सीता पत्युः पार्श्वे आगत्य स्थितवती।

चारुदत्तः तां शङ्कापूर्णया दृष्ट्या पश्यन् अस्ति। तदा एकः पिशाचः उच्चैः हसन् अवदत्– "भोः, भीतिः मास्तु, शङ्का अपि मास्तु। सा भवतः पत्नी एव, न अन्या" इति।

सः एव पिशाचः सीताम् उद्दिश्य अवदत्– "शृणोतु भगिनि, इदानीं वयं भवत्याः पत्युः रूपं धृत्वा तिष्ठामः। यदा वयं चत्वारः अपि भवत्याः पुरतः भवामः तदा पत्युः अभिज्ञानं प्राप्तव्यं भवत्या। ज्ञातं वा?" इति।

किम् उत्तरं वक्तव्यम् इति सीता यावत् चिन्तयन्ती आसीत् तावता तत्र अन्धकारः व्याप्तः। क्षणकालानन्तरं पुनः कान्तिः उत्पन्ना। इदानीं सीतायाः पुरतः चत्वारः समानाकारकाः पुरुषाः स्थिताः सन्ति।

सीता तान् सर्वान् परीक्षादृष्ट्या दृष्टवती। तावता तस्याः मनसि कश्चन उपायः स्फुरितः। सा आत्मनि धैर्यं पूरयन्ती तान् उद्दिश्य उक्तवती– "शृण्वन्तु, सद्यः एव मम पतिः मह्यम् आभरणं कारितवान्। तच्च आभरणं कीदृशम्? तत् अङ्गुलीयकम्, उत नासाभरणम्, अथवा ताटङ्कः, उत नूपुरः? तत् किम् इति हस्तस्य उपरि लिखित्वा प्रदर्शनीयम्। तदा अहं 'मम पतिः कः?' इति वदामि" इति।

"भवती बुद्धिमती अस्ति। हस्तस्य उपरि लेखितुं सूचयति। प्रायः भवत्याः पत्युः हस्ते जन्मजातं कालकं किमपि स्यात्। तत् दृष्ट्वा पत्युः अभिज्ञानं प्राप्तव्यम् इति भवत्याः चिन्तनं खलु? सत्यं वदतु" इति उक्तवान् कश्चन पिशाचः।

"किमर्थं शङ्का? चत्वारः अपि हस्तं स्वयं पश्यन्तु नाम?" इति सीता धैर्येण उक्तवती।

"एवं तर्हि भवत्याः चिन्तनम्– आभरणस्य नाम पतिः केवलं जानाति इति खलु? अस्तु तावत्, अहं पिशाचरूपेण तिष्ठामि। अवशिष्टेषु त्रिषु पतिम्

अभिजानातु तावत्" इति वदन् सः पिशाचः पिशाचरूपेण अतिष्ठत्।

सः एव पिशाचः अन्येषां लेखनार्थं लेखन्याः मस्याः च व्यवस्थाम् अकरोत्। ते त्रयः अपि स्वहस्ते आभरणस्य नाम लिखितवन्तः।

सर्वप्रथमं कश्चन पिशाचः स्वहस्तम् अग्रे प्रासारयत्। तत्र लिखितम् आसीत्– 'नासाभरणम्' इति। द्वितीयस्य हस्ते अपि 'नासाभरणम्' इत्येव लिखितम् आसीत्। तृतीयस्य हस्ते अपि तदेव– 'नासाभरणम्' इति।

तदा पिशाचः उच्चैः हसन् अवदत्– "समाप्ता खलु परीक्षा? इदानीं वदतु तावत्– कः भवत्याः पतिः इति" इति।

सीता मन्दहासपूर्वकम् उक्तवती– "भवन्तः सत्स्वभावयुताः पिशाचाः। अतः एव आवाम् अपीडयन्तौ मनोविनोदार्थं चेष्टां प्रदर्शयन्ति। भवन्तः स्वमायया मम पत्युः मनः वशीकृत्य तद्द्वारा 'नासाभरणम्' इति लेखितवन्तः, सत्यम्। भवतां स्वभावः श्लाघ्यः एव। किन्तु भवद्भिः एकः अंशः न लक्षितः" इति।

"सः अंशः कः?" इति झटिति कश्चन पिशाचः अपृच्छत्।

"मम पत्युः जन्मजातः स्वभावः यत् सः लेखनात् पूर्वं सर्वत्र अपि उपरिभागे 'ॐ' इति लिखति एव। भवन्तः यद्यपि वशीकरणार्थं प्रयत्नं कृतवन्तः, किन्तु ओङ्कारविषये स च प्रयत्नः विफलः। यस्य हस्ते ओङ्कारः भवति स एव मम पतिः" इति वदन्ती सीता पतिं प्रदर्शितवती।

"सत्यं खलु? ओङ्कारविषये अस्माकं वशीकरणशक्तिः सर्वथा विफला अभवत्" इति वदन्तः ते पिशाचाः अदृश्यतां गतवन्तः।

सीतायाः बुद्धिमत्ताकारणतः पिशाचपीडा परिहृता अभवत्। अतः चारुदत्तः पत्नीं बहुधा प्रशंसितवान्। तस्यां रात्रौ तौ तस्मिन् एव गृहे स्थित्वा सूर्योदयानन्तरं स्वग्रामं गतवन्तौ।






करवीरपुरं प्राप्य कृष्णः द्वारपालकानां समीपं गत्वा आत्मनः परिचयं निवेद्य उक्तवान्– "शृगालवासुदेवेन सह युद्धार्थं वयम् अत्र आगताः। शीघ्रं गत्वा तम् एतां वार्तां निवेदयन्तु" इति।

एतं सन्देशं श्रुतवतः शृगालवासुदेवस्य नेत्रे रक्ते जाते। सः सूर्येण अनुगृहीतं रथम् आरूढवान्। स्वर्णमयं कवचं धृत्वा धनुर्बाणादिकं, खड्गम्, अन्यानि कानिचन आयुधानि च स्वीकृत्य युद्धार्थं प्रस्थितवान्। स्वबलपराक्रमविषये तस्य परमविश्वासः आसीत्। अतः सः युद्धार्थं सेनाम् असूचयित्वा एव प्रस्थितः अस्ति।

कालयमः इव आगच्छन्तं शृगालवासुदेवं दृष्ट्वा बलरामकृष्णौ क्षणकालम् अधीरौ जातौ। दमघोषः उत्साहपूर्णैः वचनैः तौ प्रोत्साहितवान्। एतदनन्तरं कृष्णः स्वरथं शत्रुरथस्य समीपं नीतवान्। तयोः मध्ये घोरं युद्धम् आरब्धम्।

उभौ अपि परस्परयोः उपरि बाणवर्षणं कुरुतः। किन्तु तानि अस्त्राणि मध्ये घर्षणं प्राप्य भग्नानि भवन्ति। एतन्मध्ये कृष्णः शृगालवासुदेवस्य धनुषः भङ्गं कृतवान्, सारथिं चापि मारितवान्। किन्तु शृगालवासुदेवः एतेन किञ्चिदपि विचलितः न जातः। सः अपरं धनुः स्वीकृत्य स्वयं रथं चालयन् कृष्णस्य पुरतः आगत्य उक्तवान्– "भवान् गोमान्तकसमीपे कांश्चन राज्ञः पराजितवान् इति श्रुतम्। तत्रत्याः राजानः मूर्खाः असमर्थाः च आसन्। इदानीं भवान्

१४. शृगालवासुदेवस्य वधः।



एकाकी युद्धार्थम् अग्रे आगतः, अहम् अपि एकाकी अस्मि। एतत् एव वस्तुतः धर्मयुद्धम्। अस्मिन् प्रपञ्चे उभयोः वासुदेवयोः स्थितिः असम्भवा एव। अतः अहं भवतः संहारं कृत्वा अद्वितीयः वासुदेवः भविष्यामि। किम् अधिककथनेन? अग्रे आगच्छतु तावत्। भवतः युद्धकौशलं पश्यामि'' इति।

कृष्णः परिहासपूर्णेन स्वरेण उक्तवान्– ''भोः, युद्धं करणीयम् इति इतोऽपि इच्छा अस्ति चेत् युद्धे प्रवृत्तः भवतु। भवतः पराक्रमः कियान् इति अहम् अपि पश्यामि'' इति।

एतेन शृगालवासुदेवस्य क्रोधः द्विगुणितः जातः। सः निरन्तरबाणप्रयोगेण तोमरचक्रादीनां, शूल-खड्गादीनां च प्रयोगेण तं प्रदेशम् अन्धकारमयं कृतवान्। एतत् दृष्ट्वा कृष्णः उक्तवान्– ''भवता स्वशक्तिप्रदर्शनं यत् कृतं तत् दृष्टं मया। भवतः समीपे विविधानि अस्त्राणि सन्ति। किन्तु, मम समीपे अपि अस्त्राणि न न्यूनानि। इदानीं मम अस्त्रविस्तारं पराक्रमातिशयं च पश्यतु तावत्'' इति।

एवम् उक्त्वा कृष्णः शृगालवासुदेवस्य उपरि चक्रायुधस्य प्रयोगं कृतवान्। एतत् चक्रं वेगेन परिभ्रमत् भयङ्करं तेजः प्रकाशयत् विद्युद्गत्या अग्रे अगच्छत्। शृगालवासुदेवः एतादृशम् अस्त्रं न दृष्टवान् आसीत्। किन्तु अस्त्रस्य आगमनं दृष्ट्वा सः भीतः। सः यावत् अस्त्रप्रहारतः विमोचनं प्राप्तुं चिन्तयन् आसीत् तावता अस्त्रं तदीयं रुण्डं मुण्डं च पृथग् अकरोत्। यः शृगालवासुदेवः स्वपराक्रमविषये बहुधा वदन् आसीत् तस्य शिरः इदानीं भूमौ पतितम् अस्ति।

शृगालवासुदेवस्य मरणवार्तां श्रुत्वा अन्तःपुरस्त्रियः उच्चैः आक्रन्दनं कुर्वत्यः पत्युः शवसमीपम् आगतवत्यः। महाराज्ञी स्वपुत्रेण शक्रदेवेन सह आगतवती। पुत्रं कृष्णस्य पादयोः पुरतः पातयित्वा रोदनं कृतवती च। कृष्णः तस्याः सान्त्वनं कृत्वा शृगालवासुदेवस्य अन्त्यसंस्कारानन्तरं नगरप्रमुखान्, मन्त्रिणः माण्डलिकान् च एकत्रीकृत्य शक्रदेवस्य पट्टाभिषेकं निर्वर्तितवान्।

एतदनन्तर कृष्णः मथुरां प्रतिगन्तुम् इष्टवान्। तदा दमघोषः अनुमतिं दत्त्वा स्वयं अपि सेनया सह चेदिराज्यं प्रतिगतवान्। कृष्णः पञ्चानां दिनानां प्रयाणस्य अनन्तरं षष्ठे दिने मथुरां प्राप्तवान्। नगरसीमां प्राप्य सः स्वशङ्खस्य पाञ्चजन्यस्य उद्घोषं कृतवान्। शङ्खनादं श्रुत्वा उग्रसेनः यादवप्रमुखैः पुरोहितैः च सह कृष्ण-बलरामयोः स्वागतार्थम् आगतवान्। तेन सह गजाः, अश्वाः, रथाः, सैनिकाः, छत्रं, मङ्गलवाद्यानि इत्यादीनि अपि आगतानि आसन्। वन्दिनः बलरामकृष्णयोः जयघोषं कृतवन्तः। पुरोहिताः आशीर्भिः अनुगृहीतवन्तः। एतदनन्तरं बलरामकृष्णौ सवैभवं नगरप्रवेशं कृतवन्तौ। मथुरावासिनः बलरामकृष्णौ परितः स्थित्वा सन्तोषेण नृत्यम् आरब्धवन्तः। सन्तोषतरङ्गाः समग्रे नगरे प्रसृताः।

बलरामकृष्णाभ्यां पराजयं प्राप्य प्रतिगतः जरासन्धः इदानीम् अपमानाग्निना परितपति। पराजयात् अपि अधिकः अपमानकरः विषयः कः स्यात् वीरस्य? घोरेण अपमानेन चिन्तया च ग्रस्तः सः किङ्कर्तव्यतामूढः जातः आसीत्।

जरासन्धः सर्वान् महाराजान् पुनरपि सम्मेल्य उक्तवान्– "दुष्टः भगवान् पूर्वतने अस्माकं प्रयत्ने साहाय्यं न कृतवान्। अतः एव वयम् अत्यधिकं पराक्रमं प्रदर्शितवन्तः चेदपि पराजयं प्राप्तवन्तः। वयम् अपयशः प्राप्तवन्तः। एतत् शाश्वतरूपेण न तिष्ठेत्।





तस्य कलङ्कस्य क्षालनार्थं किमपि करणीयम्। तयोः संहारात् ऋते अन्यः क्रमः कोऽपि न स्फुरति। इदानीं वयं पुनः अपि समग्रया सेनया सह गत्वा मथुरायाः उपरि आक्रमणं करवाम। अस्माकं सामूहिकशक्तेः पुरतः यादवानां स्थितिः असम्भवः एव'' इति।

जरासन्धस्य प्रस्तावः सर्वैः विरोधं चर्चां च विना अङ्गीकृतः। यतः तैः अपि पूर्वं गोमान्तकसमीपे अपमाननं प्राप्तम् आसीत्। अन्यच्च ते सर्वे जरासन्धस्य दायादाः, बान्धवाः, गोत्रीयाः, आत्मीयमित्राणि वा आसन् एव। पौण्ड्रः, कलिङ्गः, दन्तवक्त्रः, शिशुपालः, शालवः, रुक्मिः, गन्धारः, त्रिगर्तः, भगदत्तः, अन्ये केचन कृष्णद्वेषिणः, अङ्गवङ्गविदेहानां, काश-करुश-मद्र-पाण्ड्यादीनां देशानां राजानः च जरासन्धस्य पक्षम् आश्रित्य युद्धं कर्तुं सिद्धाः आसन्। एवम् एकविंशतिः अक्षौहिणीसेनाः एकत्र मिलिताः।

विभिन्नप्रदेशेभ्यः समागताः सेनाः मथुरां प्राप्य यमुनातीरे, उद्यानेषु, प्राङ्गणेषु च स्थितवत्यः। एतत्सन्दर्भे जरासन्धस्य युद्धसन्नाहः पूर्णः आसीत्। अधिकप्रमाणेन सेनां सङ्ग्रहीतुं सः समर्थः जातः। सर्वे राजानः महता उत्साहेन आसन्। एतत्सन्दर्भे कृष्णः निश्चयेन पराजयं प्राप्स्यति इति तेषां निश्चयः। जरासन्धस्तु विजयः निरायासं लभ्यते इति भावयति।

कृष्णादयः दुर्गभित्तिम् आरुह्य दृष्टवन्तः। दुर्गं परितः जरासन्धस्य सेना प्रलयकालीनः समुद्रः इव स्थिता अस्ति। एतां सेनां दृष्ट्वा कृष्णः बलरामम् उक्तवान् – ''पृथिव्याः भारं न्यूनीकर्तुं भगवता एषा व्यवस्था कृता इति भाति'' इति।

अनन्तरं तौ शत्रुसेनायाः सम्मुखीकरणार्थं योजनां कृतवन्तौ।

जरासन्धः सर्वान् राज्ञः आहूय युद्धतन्त्रस्य परिचयम् उक्तवान् – ''भोः शृण्वन्तु। सर्वेषां सेना युगपत् आक्रमणं कुर्यात्। तत्र तत्र कुद्दालैः दुर्गभित्तिः पातनीया। नगरं समग्रतया उध्वस्तं करणीयम्। गोमान्तक-पर्वतस्य आक्रमणसमये यैः यत्र स्थितं ते

इदानीम् अपि व्यूहे तत्रैव तिष्ठेयुः" इति। एवं क्रमेण सेनाव्यूहोऽपि रचितः।

जरासन्धस्य सम्मुखीकरणे यादवाः सोत्साहम् उद्युक्ताः। वस्तुतः जरासन्धस्य सेनां सम्मुखीकर्तुम् अपेक्षितं सेनाबलं मथुरायाः नास्ति। तथापि तेषां धैर्यं नाम कृष्णः स्वपक्षे अस्ति इति।

कृष्णः गुरुडध्वजयुतं रथम् आरुह्य चक्रादिकम् आयुधं स्वीकृत्य युद्धार्थं प्रस्थितवान्। हलमुसलादिकं स्वीकृत्य बलरामोऽपि युद्धार्थं प्रस्थितवान्। तौ उग्रसेनेन सह गच्छन्तौ सेनायाः अग्रे तिष्ठन्तौ जरासन्धस्य सेनायाः समीपं गतवन्तौ।

सेनायाः अग्रे स्थितः जरासन्धः प्रथमं तान् सम्मुखीकृतवान्। सः कृष्णस्य पार्श्वे स्थितम् उग्रसेनम् उद्दिश्य उक्तवान् – "भोजवंशीयाः राज्यशासनं कुर्वन्ति चेत् यादवाः तेषां सेवां कुर्युः। अद्यावधि एषा एव परिपाटी आसीत्। एतादृशे भोजवंशे जातः भवान् वंशगौरवं धूलिसात्कृतवान्। अहो मूर्खता भवतः! एषः कृष्णः भवतः पुत्रं मारयित्वा तदीयं राज्यं स्वायत्तीकृतवान्। भवान् इदानीं नाममात्रेण राजा, तावदेव। कंसाय प्रतिवर्षं तर्पणं दीयते, किन्तु व्यवहारः तु कंसस्य इच्छायाः विरुद्धम्! भवतः केशाः पलिताः, किन्तु किं प्रयोजनम्? लज्जां न अनुभवति भवान्? आत्मगौरवं परित्यज्य उच्छिष्टं सेवामानः अस्ति खलु भवान्! भवान् कृष्णस्य सेवकः। राजा तु सर्वथा न, न भविष्यति अपि" इति।





एतानि वचनानि श्रुत्वा कृष्णः क्रोधेन उक्तवान्– "पूज्यस्य उग्रसेनस्य निन्दने स्वपौरुषं प्रदर्शयन् अस्ति खलु भवान्? निन्दा एव करणीया चेत् मम निन्दनं करोतु। वस्तुतः भवतः परमशत्रुः अहम् एव। केभ्यश्चित् मासेभ्यः पूर्वं गोमान्तकपर्वतसमीपे यत् प्रवृत्तं तत् किं भवान् विस्मृतवान्? कीदृशानि वचनानि वक्तव्यानि इति विषये किमर्थं चिन्तयति? पृष्ठप्रदर्शनप्रसङ्गः यथा न आपतेत् तथा युद्धं कथं करणीयम् इति प्रथमं चिन्तयतु। मम प्रतापस्य परिचयं पूर्णतः प्राप्नोतु एतत्सन्दर्भे" इति। अनन्तरं सः बाणप्रयोगेण जरासन्धस्य धनुषः भङ्गं कृतवान्।

उभयोः पक्षयोः घोरं युद्धं प्रवृत्तम्। एतस्मिन् युद्धे उग्रसेनः अपि अपूर्वं पराक्रमं प्रदर्शितवान्। एतत्सन्दर्भे कृष्णस्य रुक्मेः च मध्ये घोरं युद्धं प्रवृत्तम्। अत्र रुक्मिः पराजयं प्राप्य प्रतिगतवान्।

बलरामः हूँकुर्वन् शत्रुसेनायाः उपरि हठात् आक्रमणं कृतवान्। एतत् दृष्ट्वा जरासन्धः बलरामस्य अवरोधं कृतवान्। युद्धे उभयोः अपि रथौ भग्नौ। तौ गदायुद्धम् आरब्धवन्तौ। तयोः युद्धम् अपूर्वम् आसीत्। एतयोः युद्धं द्रष्टुम् इतरे सैनिकाः किञ्चित्कालं युद्धं स्थगितवन्तः! जरासन्धः बलरामश्च गदाप्रहारात् आत्मानं चातुर्येण रक्षन्तौ, अन्यं गदया प्रहरन्तौ, सिंहौ इव युद्धं कुरुतः। तयोः देहतः रक्तं धाराकारेण प्रवहति। पृथ्वी कम्पिता जाता। अन्ते कोऽपि कमपि मारयितुं पराजेतुं वा असमर्थः जातः। गदायुद्धं समाप्तम् अभवत्।

एतदनन्तरं बहूनि दिनानि यावत् युद्धम् अनुवृत्तम्। किन्तु यथा चिन्तितं तथा विजयं प्राप्तुं न शक्तवान् जरासन्धः। प्रतिदिनं तस्य सेनायाः परिमाणं न्यूनीभवति। अन्ते सः श्रान्तः। 'एतत्सन्दर्भे अपि दैवं मम अनुकूलकरं नास्ति' इति आलोच्य सः स्वपक्षीयैः इतरैः राजभिः सैनिकैः च सह मगधदेशं प्रतिगतवान्।

एतावता अपि जरासन्धः निराशः न जातः। एतेन एव प्रकारेण सः अष्टादशवारं मथुरायाः उपरि आक्रमणं कृतवान्। तथापि सः कृष्णं

संहर्तुं पराजेतुं वा न शक्तवान्। कृष्णः अपि जरासन्धस्य वधं कर्तुं न शक्तवान्। सर्वस्य अपि कश्चन कालः भवति खलु?

दिनानि सुखेन यापितानि भवन्ति। कदाचित् बलरामः स्वकीयं बाल्यं स्मृतवान्। कदाचित् गोकुलं द्रष्टव्यम् इति इच्छा तस्य मनसि तीव्रा जाता। सः स्वकीयाम् इच्छां कृष्णस्य पुरतः प्रकटितवान्। "भवान् गत्वा आगच्छतु। अहं पुनः कदाचित् आगमिष्यामि" इति बलरामं सूचितवान् कृष्णः। बलरामः अरण्यवासयोग्यं वेषं धृत्वा गोकुलं प्रति प्रस्थितवान्। आगच्छन्तं बलरामं दूरतः एव दृष्ट्वा परमसन्तुष्टाः गोकुलवासिनः स्वागतार्थं धावन्तः आगतवन्तः। बलरामः ज्येष्ठान् विनयेन नमस्कृतवान्। नमस्कृतवतः कनिष्ठान् आशिषा अनुगृहीतवान्। समवयस्कान् स्नेहितान् प्रीत्या आलिङ्गितवान्। गोपिकानां योगक्षेमम् एकैकशः पृष्टवान्।

वृद्धाः गोपाः तं स्वसमीपे उपवेश्य वार्तालापं कृतवन्तः। तत्सन्दर्भे ते उक्तवन्तः– "वत्स! भवतः आगमनतः वयं सर्वे आनन्दतुन्दिलाः जाताः। विविधानि अपूर्वाणि कार्याणि कुर्वन्तौ भवन्तौ अपारां कीर्तिं प्राप्तवन्तौ। भवतोः पराक्रमं स्मरताम् अस्माकम् अपि अभिमानः वर्धते। एवं पराक्रमशालिनौ अपि भवन्तौ यत्र गावः चारिताः, तां भूमिं न विस्मृतवन्तौ। भवान् स्वयम् आगतः" इति।

"भवन्तः आवयोः पालनं पोषणं च कृतवन्तः। भवतां सहवासतः आवाभ्याम् उत्तमसंस्कारः प्राप्तः। उत्तमाः बान्धवाः मित्राणि च सौभाग्यात् एव लभ्यन्ते। आवाभ्यां बाल्ये यानि दिनानि यापितानि तानि कदापि विस्मर्तुं न अर्हावः" इति उक्तवान् बलरामः।

बलराममुखात् एतानि वचनानि श्रुत्वा सर्वे गोपाः सन्तुष्टाः जाताः। ते बलरामस्य अन्नपानार्थम् उत्तमान् पदार्थान् आनीय स्थापितवन्तः।





# इन्द्रजालप्रभावः

चित्रकूटनामकं देशं चित्रसेनः नाम राजा पालयन् आसीत्। विविधेषु मनोरञ्जककार्यक्रमेषु तद्देशीयायाः महाराज्ञ्याः विशेषासक्तिः। तत्रापि इन्द्रजालविषये अपरिमिता अभिरुचिः तस्याः। राज्ञ्याः अनुरोधानुसारं कदाचित् राजा घोषितवान् यत् यः अत्युत्कृष्टम् ऐन्द्रजालिकं प्रदर्शनम् उपस्थापयति तस्मै लक्षमितानि सुवर्णनाणकानि दीयन्ते, सः सत्क्रियते च इति।

एतां घोषणां श्रुत्वा बहवः प्रसिद्धाः ऐन्द्रजालिकाः राजधानीम् आगतवन्तः। इन्द्रजालप्रदर्शनार्थं राजा कञ्चन विशालं मण्डपं व्यवस्थापितवान्।

स्पर्धालवः सर्वे ऐन्द्रजालिकाः स्वप्रतिभानुगुणं विभिन्नान् चमत्कारान् प्रदर्शितवन्तः। कश्चित् वायौ सञ्चारं कृतवान्। अपरः कश्चित् कञ्चित् पुरुषं वानरं कृत्वा तद्द्वारा वाक्यानि वाचितवान्। अन्यः कश्चित् सभायां भूकम्पम् उत्पादितवान्।

कार्यक्रमस्य समाप्तेः अनन्तरं महाराजस्य पुरतः समस्या आगता यत् कः श्रेष्ठः इति केन मानेन निर्णेतव्यम् इति। अतः सः सभामण्डपम् आगत्य प्रेक्षकान् उद्दिश्य उक्तवान्– "ऐन्द्रजालिकेषु कः श्रेष्ठः इति यः सम्यक् निर्णेष्यति तस्मै दशसहस्रं सुवर्णनाणकानि दीयन्ते" इति।

एतत् श्रुतवतां प्रेक्षकाणां मध्ये कोलाहलः उत्पन्नः। एकैकः अपि अग्रे आगत्य कस्यचित् ऐन्द्रजालिकस्य नाम वदति। प्रेक्षकाणां निग्रहणम् एव क्लेशकरं जातम्।

तदा जालानन्दः नाम ऐन्द्रजालिकः स्वकीयायाः इन्द्रजालविद्यायाः प्रभावेण प्रेक्षकेषु शान्तिं कल्पयित्वा महाराजं पश्यन्



काले इष्टतमस्य ऐन्द्रजालिकस्य नाम चिटिकायां लिखित्वा चिटिकां महाराजाय दत्तवन्तः ऐन्द्रजालिकाः। राजा ताः चिटिकाः उद्घाट्य पठितवान्। सर्वासु चिटिकासु जालानन्दस्य एव नाम आसीत्।

एतत् ज्ञात्वा कश्चन ऐन्द्रजालिकः अग्रे आगत्य उक्तवान्- "महाराज! अत्र कापि वञ्चना अस्ति। जालानन्दापेक्षया अधिकसमर्थः अन्यः अस्ति इति मम अभिप्रायः" इति।

तदा चित्रसेनः पृष्टवान्– "तर्हि तस्य नाम कुतः भवता न लिखितम्? किमर्थं वा जालानन्दस्य नाम लिखितम्?" इति।

ऐन्द्रजालिकः उक्तवान्– "महाप्रभो! अतः एव खलु वदामि– कापि वञ्चना प्रवृत्ता इति? सः सर्वेषाम् उपरि इन्द्रजालप्रभावं स्थापितवान्। न्यायोचितनिर्णयस्य प्राप्त्यर्थम् इन्द्रजालविद्यायाः प्रयोगः सर्वथा निषिद्धः खलु?" इति।

अन्ये ऐन्द्रजालिकाः अपि एतम् एव वादं समर्थितवन्तः। तदा जालानन्दः महाराजम् उक्तवान्– "प्रभो! न्यायनिर्णयसन्दर्भे इन्द्रजालविद्यायाः उपयोगः न स्वीकरणीयः इत्यंशम् अहम् अपि अङ्गीकरोमि। सर्वान् सम्मोहयन् ऐन्द्रजालिकः इतरान् ऐन्द्रजालिकान् अपि सम्मोहयितुं शक्नोति चेत् तत् तस्य श्रेष्ठत्वं द्योतयति खलु? तदर्थं मया एषः मार्गः आश्रितः। एतावता

उक्तवान्– "प्रभो! इन्द्रजालविद्यायाः श्रेष्ठत्वं निर्णेतुं सामान्याः प्रेक्षकाः न प्रभवन्ति। वस्तुतः भवान् निर्णेतुम् अर्हति स्म। किन्तु इदानीं भवतः एव विकल्पाः। अतः इदानीं शिष्टः एकः एव उपायः" इति।

"कः सः उपायः? कथयतु तावत्" इति कुतूहलपूर्वकम् उक्तवान् राजा चित्रसेनः।

"इन्द्रजालविद्यायाः महत्त्वं निर्णेतुं वयम् ऐन्द्रजालिकाः एव समर्थाः। वयं तु सर्वथा निष्पक्षपातिनः। अतः अस्मभ्यं यः रोचते तस्य नाम चिटिकायां लिखामः वयम्। यस्य नाम अधिकैः लिखितं भवति सः एव श्रेष्ठः इति निर्णयः" इति उपायं सूचितवान् जालानन्दः।

एषा सूचना चित्रसेनेन अनुमता। अल्पे एव

न्यायनिर्णयः न सम्पन्नः। स च इदानीं भवदधीनः'' इति।

तदा राजा मन्दहासपूर्वकं घोषितवान्– ''ऐन्द्रजालिकानाम् उपरि अपि इन्द्रजाल-प्रभावं स्थापयन् जालानन्दः सर्वश्रेष्ठः ऐन्द्रजालिकः'' इति।

राज्ञः एतं निर्णयं सर्वे ऐन्द्रजालिकाः अङ्गीकृतवन्तः।

चित्रसेनः जालानन्दाय सहस्रं सुवर्ण-नाणकानि यच्छन् पृष्टवान्– ''भवतः एतत् इन्द्रजालप्रदर्शनम् अपूर्वम् एव। किन्तु भवतः अपेक्षया अपि श्रेष्ठम् ऐन्द्रजालिकं जानाति वा भवान्?'' इति।

''अवश्यं जानामि। मम पत्नी ममापेक्षया श्रेष्ठा। तस्याः सौन्दर्येण सम्मोहितः अहं तस्याः चरणदासः सञ्जातः अस्मि। तया वशीकृतः अहम् इन्द्रजालविद्याम् अभ्यस्तवान्'' इति विवरणं दत्तवान् जालानन्दः।

एतेन उत्तरेण चित्रसेनः न तृप्तः। सः पुनः उक्तवान्- ''भवतः इन्द्रजालं तु तात्कालिकः भ्रमः। भवतः पत्न्याः सौन्दर्यं तु न भ्रमः। तयोः महदन्तरं दृश्यते खलु?'' इति।

तदा जालानन्दः उक्तवान्– ''इन्द्रजालभ्रमः काश्चन घण्टाः यावत् तिष्ठति चेत् सौन्दर्यभ्रमः कानिचन वर्षाणि यावत् स्थास्यति। महाराज! अतः सौन्दर्यभ्रमः अपि अशाश्वतः एव। वस्तुतः तु एतत् जगत् एव महतः ऐन्द्रजालिकस्य भगवतः लीला'' इति।

इदानीं राजा पुनः तस्मै लक्षं सुवर्णनाणकानि दत्त्वा उक्तवान्– ''अहम् अपि मम पत्न्याः सौन्दर्यभ्रमेण सम्मोहितः सन् प्रजाहितकार्यं विस्मृत्य भोग-विलासेषु मग्नः आसम्। भवतः वचनैः मम भ्रमः अपगतः। अतः एतत् उपायनं दत्तवान्'' इति।

जालानन्दः सन्तुष्टः सन् ततः निर्गतवान्। इन्द्रजालद्वारा महाराजं जनकल्याणकार्येषु प्रवर्तितवन्तं तं जनाः श्लाघितवन्तः।





# धीरानन्दः

प्राचीने काले दण्डकारण्ये योगानन्दः नाम कश्चन श्रेष्ठः सिद्धयोगी आसीत्। गोदावरीतीरे तेन आश्रमः स्थापितः आसीत्। जातिभेदं विना सः सर्वान् अपि प्रीत्या योगविद्यां पाठयति स्म।

योगानन्दस्य नियमः आसीत् यत् सः छात्रत्वम् इच्छन्तम् एकं वर्षं यावत् कठोरं परीक्षते। यः तस्यां परीक्षायाम् उत्तीर्णः भवति सः एव योगम् अभ्यस्तुम् अर्हति। अनुत्तीर्णेन गृहं प्रतिगन्तव्यं भवति स्म।

योगानन्दः तदा तदा शिष्यैः सह समीपस्थानि अरण्यानि गच्छति। तदा शिष्याः तत्र नूतनान् बहून् अंशान् जानन्ति। योगानन्दः तत्तत्स्थलस्य वैशिष्ट्यं बोधयति। अनेकविधानां राक्षसानां स्वाधीनीकरणम् अपि बोधयति सः।

कदाचित् धीरसिंहः नाम कश्चन क्षत्रिययुवकः योगानन्दस्य शिष्यत्वम् इच्छन् आश्रमम् आगतवान्। सः वयसा अल्पः स्यात् नाम, किन्तु तस्य युद्धकलानैपुण्यं तु असदृशम् एव। सः भयं नाम्ना अपि न जानाति। अन्यच्छात्राः इव धीरसिंहः अपि एकवर्षात्मकपरीक्षां सम्मुखीकृतवान्। तस्य अवधेः अन्तिमदिनानि प्रचलन्ति आसन्।

कदाचित् योगानन्दः शिष्यैः सह आश्रमात् प्रस्थितः किञ्चन सरोवरं प्रति गतवान्। सरोवरस्य तीरे लघु पर्णशाला अपि निर्मिता। पर्णशालायां लघुप्रकोष्ठाः अपि निर्मिताः। एवं तात्कालिकवसत्यर्थं योग्या पर्णशाला सिद्धा जाता।

पर्णशालातः अनतिदूरे एकः सुविशालः वटवृक्षः आसीत्। स च वृक्षः त्रियोजनविस्तीर्णः आसीत्।

सरोवरप्राप्त्यनन्तरं प्रथमरात्रौ एव

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

योगानन्दः शिष्यान् सर्वान् सूचितवान् – "एषः वटवृक्षः अतीव पुरातनः। त्रेतायुगीयाः पिशाचाः अपि अत्र निवसन्ति। एतस्य विषये विस्तरेण पुनः कदाचित् बोधयिष्यामि। किन्तु सर्वैः एका जागरूकता आश्रयणीया यत् केनापि रात्रौ वृक्षस्य समीपं न गन्तव्यम्। एषः मम आदेशः" इति।

रात्रौ भोजनस्य अनन्तरं सर्वे शयनं कृतवन्तः। धीरसिंहः अपि शयनं कृतवान्। किन्तु मध्यरात्रसमये तस्य निद्रा भग्ना। अनन्तरं महता प्रयत्नेन अपि सः निद्रां न प्राप्तवान्। अतः सः मन्दम् उत्थाय बहिः आगतवान्, वटवृक्षस्य समीपं गतवान् च।



धीरसिंहः स्वभावतः धीरः आसीत् एव। अतः अन्धकारात्, पिशाचस्थितितः वा सः न भीतः। वृक्षे के के पिशाचाः निवसन्ति इति द्रष्टव्यं, यदि शक्यं तैः सह वार्तालापः अपि करणीयः इति तस्य विचारः।

वृक्षे तत्र तत्र दीर्घाः जटाः आसन्। तासां मध्ये सः अग्रे गतवान्। तदा तेन दृष्टं यत् काचित् कृष्णवर्णीया आकृतिः जटां गृहीत्वा अवतरन्ती अस्ति! अन्यः कश्चित् यदि एतत् पश्येत् तर्हि तस्य हृदयस्तम्भनं भवेत्। किन्तु धीरसिंहः तु किञ्चिदपि न भीतः। आत्मीयस्य मित्रस्य आगमनम् इव सः पिशाचागमनं पश्यन् स्थितवान्।

पिशाचः भूमौ अतिष्ठत्। धीरसिंहः गम्भीरेण ध्वनिना पृष्टवान् – "कः भवान्?" इति।

"मम नाम अनुकम्पनः इति। श्रीरामस्य पत्नी सीतादेवी अरण्ये निवसति इति वार्ताम् अहम् एव सर्वप्रथमं रावणं श्रावितवान्" इति सा आकृतिः अवदत्।

धीरसिंहः किञ्चिदपि विचलितः न जातः। सः अनुकम्पनम् उक्तवान्– "एवं तर्हि भवान् त्रेतायुगतः अत्रैव निवसति!" इति।

"अहम् अधिकतया नरके निवसामि। मध्ये कदाचित् अनुमतिं प्राप्य एतं विशालं वटवृक्षं प्रति आगच्छामि" इति वदन् मन्दया गत्या सः पिशाचः धीरसिंहस्य दिशि आगच्छत्।

पिशाचः अनुकम्पनः मन्दया गत्या अग्रे सरन् अस्ति इति धीरसिंहः लक्षितवन् एव।



तथापि सः निर्भयेन स्वस्थले एव तिष्ठन् पिशाचम् पृष्टवान् – "भवान् नरकतः आगतः? नरके भवतः मित्र-बान्धवाः कथं सन्ति? सर्वे कुशलिनः किम्?" इति।

"कुशलम्! नरकवासिनां सङ्कटं किमिति वदामि, एकैकः अपि तत्र अवर्णनीयां यातनाम् अनुभवति। अहो कष्टम्!" इति अवदत् पिशाचः।

तदा धीरसिंहः पृष्टवान् – "अत्यधिकां यातनाम् अपि कः धैर्येण सहते?" इति।

"रावणः। सः एकः एव तादृशः, यस्य च धैर्यं नितरां प्रशंसनीयम् अस्ति" इति अवदत् अनुकम्पनः।

धीरसिंहः कुतूहलेन पृष्टवान् – "रावणाय विहितः दण्डः कीदृशः?" इति।

"तप्तं तैलभाण्डं तेन उष्णीकरणीयं भवति" इति उक्तवान् अनुकम्पनः।

"एवं वा! एतत् तु दारुणं दण्डनम्। तर्हि एतदपि सूचयतु - कः नरकदण्डनं सोढुं सर्वथा न शक्नोति?" इति पृष्टवान् धीरसिंहः।

"नरकयातनां सोढुं सर्वथा अशक्तः नाम कुम्भकर्णः एव। वेदनां सोढुम् अशक्तः सः अहोरात्रम् आक्रोशनं करोति। अन्येषां निद्राभङ्गं जनयति च" इति उत्तरं दत्तवान् अनुकम्पनः।

धीरसिंहः पृष्टवान् – "कुम्भकर्णाय किं दण्डनं विहितम्? घोरतरं वा तत्?" इति।

"अथ किम्? अग्निज्वालानां मध्ये स्थातव्यं तेन" इति सूचितवान् अनुकम्पनः।

"एवं वा! तर्हि आक्रोशनं विना किम् अन्यत् कुर्यात् सः?" इति अनुकम्पपूर्वकम् उक्तवान् धीरसिंहः।

"कदाचित् अग्निज्वालायां तम् अधोमुखम् अपि स्थापयन्ति यमकिङ्कराः" इति पुनः उक्तवान् अनुकम्पनः।

"अहो दुर्गतिः कुम्भकर्णस्य! सः कुम्भकर्णः कथम् आक्रोशनं करोति इति प्रदर्शयितुं शक्नोति वा भवान्?" इति पृष्टवान् धीरसिंहः।

"अवश्यं प्रदर्शयामि" इति उक्त्वा पिशाचः भयङ्करम् आक्रोशनं कृतवान्। तत् श्रोतुम् अशक्तः धीरसिंहः कर्णयोः अङ्गुलिं स्थापितवान्।

"एतावदेव वा! भवतः आक्रोशनं अज-मेषादीनां क्रन्दनं च समानम्। कुम्भकर्णः इव आक्रोशनं कर्तुं भवान् न शक्नोति प्रायः" इति धीरसिंहः अनुकम्पनम् उक्तवान्।

"तर्हि इदानीं शृणोतु तावत्" इति वदन् अनुकम्पनः पूर्वापेक्षया अपि द्विगुणितेन बलेन आक्रोशनं कृतवान्। इदानीं धीरसिंहः हस्तद्वयेन कर्णद्वयं पिहितवान् चेदपि किञ्चिदिव शिरोभ्रमणम् अनुभूतवान् इव।

"एतावदेव वा? एषः स्वरः तु अश्वस्य हेषारवम् अनुकरोति स्म। कुम्भकर्णः इतोऽपि उच्चैः आक्रोशनं कृतवान् स्यात् एव। किन्तु भवान् तस्य ध्वनेः अनुकरणं कर्तुम् असमर्थः" इति उक्तवान् धीरसिंहः।

"किमर्थं न शक्येत? इदानीं पश्यतु तावत्" इति वदन् अनुकम्पनः दीर्घं श्वासं स्वीकृत्य सम्पूर्णेन बलेन आक्रोशनं कृतवान्।

धीरसिंहेन समग्रेण हस्तद्वयेन कर्णयोः पिधानं कृतं चेदपि प्रयोजनं न जातम्। ध्वनेः आघातेन सः तत्रैव मूर्च्छितः जातः।

एतम् एव सदवकाशं मन्यमानः अनुकम्पनः धीरसिंहं गलितुम् अग्रे आगतवान्। अत्रान्तरे पिशाचस्य आक्रोशनेन गुरुः योगानन्दः जागरितः सन् उत्थाय आश्रमात् निर्गत्य वेगेन वटवृक्षसमीपम् आगतवान्। अपाय-परिस्थितिं ज्ञात्वा कमण्डलुजलं किञ्चित् स्वीकृत्य अनुकम्पनस्य उपरि क्षिप्तवान्। एतस्य प्रभावतः भीतः अनुकम्पनः धावन् पाताललोकं प्रविष्टवान्।

एतदनन्तरं योगानन्दः धीरसिंहस्य मुखात् प्रवृत्तं समग्रं श्रुत्वा योगानन्दः उक्तवान्— "वत्स! भवान् मम आदेशं किमर्थं न पालितवान्? तथापि भवतः साहसप्रवृत्त्या अहं सन्तुष्टः अस्मि। अद्य आरभ्य भवन्तं 'धीरानन्दः' इति नाम्ना आह्वयामि। भवतः शिष्यत्वम् अनुमतं मया" इति।

तद्दिनतः एव धीरानन्दः योगविद्यायाः अभ्यासम् आरब्धवान्।





# विमर्शनम्

कुमारगिरिराजस्य आस्थाने रामशर्मा नाम कविः आसीत्। रामशर्मा प्रतिभावान्, किन्तु विमर्शकानां विषये तस्य सर्वथा अनादरः।

'काव्यरसिकाः काव्यं पठित्वा तृप्ताः भवन्ति चेत् अलम्। विमर्शनं व्याख्यालेखनम् इत्यादिकं सर्वथा व्यर्थम्' इति सदा वदति स्म सः।

किन्तु राजा कवीन् विमर्शकान् चापि समानेन आदरेण पश्यति। एतत् दृष्ट्वा रामशर्मा असहनां प्रकटयति। कदाचित् प्राप्ते अवकाशे, रामशर्मा राजसभायां स्वकीयं विचारं सुस्पष्टं निरूपितवान् अपि।

एकदा राजा रामशर्माणं स्वसमीपम् आहूय उक्तवान् – "कविवर्य! भवता सद्यः एव किञ्चन काव्यं लिखितं खलु? तद्विषये गोविन्दपुरस्य भूस्वामी भुजगपतिः किं वदति इति श्रोतव्यम् इति मम इच्छा। अतः तं दृष्ट्वा तदीयम् अभिप्रायं ज्ञात्वा आगच्छति वा भवान्?" इति।

राज्ञः सूचनानुसारं रामशर्मा गोविन्दपुरं गतवान्। तत्र भुजगपतिं दृष्ट्वा स्वकाव्यविषये तदीयम् अभिप्रायं पृष्टवान्।

भुजगपतिः रामशर्मणः वचनं श्रुत्वा क्षणकालम् आलोच्य उक्तवान् – "कविवर्य! अहं भवतः काव्यम् एकवारं पठितवान्। काव्यं तु प्रौढम् अस्ति। अतः बहुत्र मया तात्पर्यं न गृहीतम्। तस्य काव्यस्य व्याख्या कापि यदि अभविष्यत् तर्हि वरं स्यात् इति मम अभिप्रायः" इति।

रामशर्मा राजधानीं प्रत्यागत्य भुजगपतेः अभिप्रायं महाराजं निवेदितवान्।

तदा राजा उक्तवान् – "एवं तर्हि भवान् देवपुरीम् अपि गत्वा आगच्छतु। तत्र

वल्लभशर्मा नाम कविः अस्ति। तं दृष्ट्वा भवदीयस्य नूतनकाव्यस्य विषये तदीयम् अभिप्रायं ज्ञात्वा आगच्छतु" इति।

रामशर्मा वल्लभशर्मणः समीपं गतवान्। आगमनकारणं निवेदितवान् च।

तदा वल्लभशर्मा विनयेन निवेदितवान्– "कविवर! भवदीयं काव्यं श्रेष्ठम् इत्यत्र विमतिः एव नास्ति। रसपोषणविषये तत्र भवता महती प्रतिभा प्रदर्शिता। पात्रचित्रणे भावपोषणे च अपूर्वता दृश्यते। किन्तु तत्र केचन दोषाः अपि सन्ति। उक्तं खलु कालिदासेन– 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति। अतः स च विषयः गौणः" इति।

देवपुरीतः आगतः रामशर्मा वल्लभशर्मणः अभिप्रायं महाराजं निवेदितवान्।

तदा महाराजः पुनः रामशर्माणं सूचितवान् – "भवान् एतस्य नगरस्य प्रसिद्धविदुषः शेषाचलशास्त्रिणः अभिप्रायम् अपि सङ्गृह्य आगच्छतु" इति।

रामशर्मा शेषाचलशास्त्रिणं दृष्टवान्। रामशर्मणः वचनं श्रुत्वा शेषाचलशास्त्री उक्तवान् – "कविवर्य! अन्यथा मा चिन्तयतु। स्पष्टवचनार्थं क्षन्तव्यः अहम्। भवतः परिश्रमः इतोऽपि अपर्याप्तः" इति। अनन्तरं काव्ये कुत्र कुत्र पेलवता दृश्यते इति सोदाहरणं प्रदर्शितवान् अपि।

गृहम् आगतः रामशर्मा चिन्तनमग्नः जातः– 'व्याख्यायाः अभावतः भुजगपति-सदृशाः सामान्याः मम काव्यम् अवगन्तुं न शक्नुवन्ति इति ज्ञातम्। वल्लभशर्मणः मेलनेन काव्यस्थाः भाषादोषाः ज्ञाताः। शेषाचलशास्त्रिणः दर्शनेन काव्यरचनायां योग्यं मार्गदर्शनं प्राप्तम्। एवं तर्हि विमर्शनेन महत् प्रयोजनम् अस्ति'।

रामशर्मणा विमर्शनस्य महत्त्वं सम्यक् अवगतम् इति ज्ञात्वा राजा अतीव सन्तुष्टः। तद्दिनतः रामशर्मा विमर्शकानां विषये अनादरं परित्यक्तवान्।





# सिंहशिशुः

बहुभ्यः वर्षेभ्यः पूर्वं कस्मिंश्चित् रजपूतग्रामे नानाजिः नाम कश्चन क्षत्रियः बालकः निवसति स्म। तदीये अल्पे एव वयसि तदीयः पिता दिवंगतः आसीत्। अतः सः पितृव्याणाम् अधीनः जातः।

पितृव्याः तं क्षत्रियोचिताः सर्वाः विद्याः पाठितवन्तः। बाल्ये एव सः धनुष्प्रयोगम्, अश्वारोहणम्, अस्त्रशस्त्रसञ्चालनम् इत्यादिकं सम्यक् अभ्यस्तवान्।

अन्येन केनापि निग्रहीतुम् अशक्तं कञ्चन अश्वं निगृह्य स्वायत्तीकृतवान् नानाजिः। तदीयस्य अश्वस्य वैशिष्ट्यम् आसीत् यत् नानाजिं विना अन्यः कश्चित् अपि तम् आरोढुं न शक्नोति स्म।

एकदा कश्चन वणिक् कांश्चन खड्गान् स्वीकृत्य राजभवनं प्रति आगतवान्। नानाजिः तस्य समीपे उपविश्य खड्गस्य दैर्घ्यं, धारायाः तीक्ष्णतां च परीक्षितुम् आरब्धवान्। ये खड्गाः तस्मै न अरोचन्त तान् सः पार्श्वे स्थापयति।

खड्गवणिक् एतत्सर्वं कुतूहलेन पश्यन् 'एषः बालकः खड्गपरीक्षणे निपुणः' इति आलोच्य एकम् उत्तमं खड्गं नानाजिहस्ते स्थापितवान्।

तं खड्गं दृष्टवतः नानाजेः नेत्रे आनन्देन विकसिते। सः उत्साहपूर्णेन स्वरेण उक्तवान्– "एषः खड्गः मह्यम् अपेक्षितः। एषः मम हस्ते यदि स्यात् तर्हि मां भाययितुं कोऽपि न शक्नुयात्" इति।

सः तं खड्गं स्वीकृत्य पितृव्याणां समीपं गतवान्। 'एतं खड्गं मह्यं दापयन्तु भोः' इति तान् निवेदितवान्।

तदा एकः पितृव्यः उक्तवान्– "एषः खड्गः आकारेण महान्। एतस्य चालनं दूरे

"रजपूतानां जानपदकथा"

तिष्ठतु, एतं सम्यक् उन्नेतुम् अपि न शक्नोति भवान्" इति।

तदा नानाजिः उक्तवान्— "अहम् इदानीं प्रवृद्धः अस्मि। मम समीपे विद्यमानः खड्गः अल्पः जातः" इति।

"वत्स! खड्गस्य आकारेण किं प्रयोजनम्? तं यः धरति तस्य शौर्यपराक्रमादयः एव महत्त्वम् अर्हन्ति। यदि खड्गस्य दैर्घ्यं न्यूनं भवेत् तर्हि एकं पदम् अग्रे गत्वा युद्धं करणीयं भवेत्" इति अपरः पितृव्यः सूचितवान्।

नानाजिः एतैः वचनैः अतीव निराशः जातः। सः मौनं प्रत्यागत्य वणिजे तं खड्गं प्रत्यर्पितवान्।

कानिचन दिनानि अतीतानि। कदाचित् केचन लुण्ठाकाः अकस्मात् ग्रामस्य उपरि आक्रमणं कृतवन्तः। ग्रामस्य गोसमूहम् आत्मना सह नीतवन्तः च। ग्रामनियमस्य अनुसारं तदा ग्रामीणाः उच्चैः डिण्डिमं वादितवन्तः।

राजभवने उपविष्टः नानाजिः डिण्डिम-वादनं श्रुतवान्। सः मार्गे गच्छतः जनान् पृष्टवान्— "एवं किमर्थं डिण्डिमवादनं क्रियते?" इति। तदा जनाः उक्तवन्तः यत् लुण्ठाकैः गावः नीताः इति।

एतत् श्रुतवतः नानाजेः मनसि चिन्तनम् आरब्धम्— 'एतम् अत्याचारं पश्यन् अपि अहं मौनं तिष्ठेयं वा? मम भीरुतां निष्क्रियतां च दृष्ट्वा माता किं न उपहसेत्?'

नानाजिः झटिति अश्वम् आरूढवान्।



खड्गं चालयन् लुण्ठाकानाम् अनुसरणं कृतवान्। अरण्यातिक्रमणतः पूर्वम् एव तेन लुण्ठाकाः दृष्टाः। लुण्ठाकानां नायकः अल्पवयस्कं नानाजिं दृष्ट्वा उच्चैः हसितवान् उक्तवान् च– "अरे बालक! मुखे श्मश्रु अपि न उद्भूतम्। एतादृशः भवान् अस्मान् भाययित्वा गाः कथं वा नयेत्?" इति।

'उत्तरदानेन समस्या परिहृता न भविष्यति' इति नानाजिः जानाति एव। अतः सः स्वकीयम् अश्वं वेगेन लुण्ठाकनायकसमीपं नीतवान्। झटिति तस्य उपरि बलात् खड्गप्रयोगं कृतवान् च।

लुण्ठाकनायकः अपायं निमेषमात्रेण ज्ञात्वा शिरसः अवनमनं कृतवान्। अतः तदीयाः प्राणाः रक्षिताः अभवन्। किन्तु तदीया नासिका खड्गेन छेदिता अभवत्।

एतेन आक्रमणेन लुण्ठाकनायकः नितरां क्रुद्धः। सः उच्चैः गर्जितवान्– "किं पश्यन्ति? एतं बालकं मारयन्तु।" इति।

अत्रान्तरे लुण्ठाकैः बलात् नीयमानाः गावः ग्रामं प्रति धावितवन्तः। नानाजिः चिन्तितवान्– 'गावः तु एतेषां हस्तात् मोचिताः। एतान् सर्वान् सम्मुखीकर्तुं मम सामर्थ्यं नास्ति' इति। अपरक्षणे सः अश्वं प्रतिनिवृत्य ग्रामाभिमुखं धावितवान्।

लुण्ठाकाः नानाजिम् अनुसृतवन्तः। किन्तु नानाजेः अश्वः तावता वेगेन अधावत् यत् ग्रामसीमाप्राप्तिपर्यन्तम् अपि लुण्ठाकाः तं ग्रहीतुं न शक्तवन्तः।

ग्रामम् आगतं नानाजिं उक्तवन्तः तदीयाः पितृव्याः– "वत्स! एतस्मिन् एव वयसि भवान् एवं साहसकार्यं प्रदर्शयति। न जानीमो वयं यत् भवान् प्रौढावस्थायां किं किं साधयेत् इति। असमसाहसी भवान्" इति।

तदा नानाजिः झटिति उक्तवान्– "अहम् अल्पवयस्कः स्यां नाम, किन्तु मम शक्तिः न न्यूना। सिंहसमानानां कुले जातः सिंहशिशुः अहम्। सञ्चारार्थम् अश्वः, हस्ते कश्चन खड्गः च यदि भवेत् तर्हि असाध्यं किं वा स्यात्? सर्वं साधयितुं शक्यते" इति।





## उड्डयनसमर्थः सस्तनप्राणी

उड्डयनसमर्थः सस्तनप्राणी एकः एव। स च – जलूकः।



## विशालः नीडः



आस्ट्रेलियादेशीया माल्ली किस्म कुक्कुटी अण्डप्रसूत्यर्थं १५ द्वादशाङ्गुलविस्तृतं नीडं निर्माति।

## डालफिन्स्-शार्क्स् च



तिमिङ्गिलजातीयाः डालफिन्स्प्राणिनः आकारेण यथा दृश्यन्ते तथा न भीकराः। तादृशः साधुस्वभावयुतः प्राणी अन्यः नास्ति एव। किन्तु आक्रमणार्थम् आगतान् शार्क्मीनान् एते दलरूपेण सम्मुखीकृत्य भाययित्वा धावयन्ति। कदाचित् स्वमुखैः तान् प्रस्तुम्प्य मारयन्ति अपि।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अकिञ्चित्करी - Of no consequence
अनुमिनोति - Infer
उपहारः - Gift
ऊर्ध्वकमुरजः - Tabla (A percussion instrument)
औरसपुत्री - One's own daughter
कलङ्कः - Black mark
कालकम् - Birth mark
कुक्कुटी - Hen
कुद्दालः - Spade
कुम्भकारः - Potter
गलितुम् - To swallow
चन्द्रशाला - A room on the terrace
छदिः - Roof of a house
जलूकः - Leech
डिण्डिमः - A kind of small drum
ताटङ्कः - Ear ring
दापयति - Secures
धारा - Blade of a sword
नासाभरणम् - Nose ring
नीडः - Nest
नूपुरः - Anklet
परिपाटी - Manner
पलितम् - Greyed
पितृव्यः - Father's younger brother
पेलवता - Slender
प्रतिनिवृत्य - Having returned
प्रपा - A place where water is offered to travellers
प्रस्तुम्फ्य - Having pierced
बधिरः - Deaf
मसी - Ink
मुण्डम् - Head
यथामति - According to one's knowledge
रुण्डम् - Trunk (Headless body)
विमर्शनम् - Deliberation
शङ्कुभवनम् - Pyramid
शिबिका - Palanquin
शिरोभ्रमणम् - Giddiness
शृगालः - Jackal
सन्निपातः - Delirious fever
सपत्नी - Fellow-wife
सम्मार्जनी - Broom
हेषारवः - Neighing

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां फेब्रवरी-८९ मासे प्रकटयिष्यामः।**





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा डिसेम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'अक्टोबर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

प्रथमचित्रम् - **नमो भवते गान्धितात!**

द्वितीयचित्रम् - **किमिदानीं दण्डियात्रा?**

प्रेषिका - श्रीमती निर्मला. के. हिरे, केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपति-५१७५०७, आ.प्र.


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# अहो महार्घता!

| | |
|---|---|
| विजयः – नमस्ते प्रसेन! अपि कुशलम्? किं तत् पुस्तकम्? | Hello Prasena! Keeping well? What's that book? |
| प्रसेनः – भाषाचिन्तनकेन्द्रितं किञ्चन पुस्तकम्। | It is one of those on linguistics. |
| वि – किं वैशिष्ट्यं तस्य? | What is special about it? |
| प्र – शब्दापशब्दविषये सम्यक् विवेचनं कृतम् इति श्रुतम्। अतः क्रीतवान्। | I was told it gives etymological discriptions. So, I bought it. |
| वि – किं मूल्यम्? | What is the price? |
| प्र – तत् तु आघातकरम् एव। अशीतिरूप्यकाणि। | It's horrible! Eighty Rupees. |
| वि – अशीतिरूप्यकाणि! अल्पस्य अपि एतस्य पुस्तकस्य? अहो महार्घता! | What? Eighty Rupees! The book is so small! |
| प्र – सत्यम्। गतसप्ताहे एव मया एतत् पुस्तकम् आपणे दृष्टम्। मूल्यं दृष्ट्वा अहम् अपि भीतः। बहुधा विचिन्त्य अन्ते विषयमूल्यात् आकृष्टः सन् क्रीतवान् एव। | Fact. I saw this book at the shop last week. I was also at first freightened by its price. Bought it finally because of the importance of the subject. |
| वि – तथापि.....। | Although...! |
| प्र – एतादृशानां पुस्तकानाम् अध्येतारः अतीव विरलाः। अतः महता मूल्येन विक्रयणं प्रकाशकानाम् अपि अनिवार्यम् एव भवति। | A book of this kind is rarely read. Therefore it becomes necessary for the publishers to sell it at a high price. |
| वि – सत्यम्। प्रकाशनक्षेत्रे एव एषा समस्या। संस्कृते तु विशेषतः। | That's true. That is the problem in publishing. It is all the more so in Sanskrit. |

* * *

Regd. No.

nutrine

# OLÉ

FRUIT GUM

THE TASTE GOES BOOM IN YOUR MOUTH!

Pop'em. Chew'em. Love'em! In four funtastic real fruit flavours: Strawberry. Watermelon. Orange. Lemon. Crunch into that juicy soft centre. And feel the flavour hit you!